# १० अंतर बताओ





जवाब :

१. फूलों की पंखुड़ियां ज्यादा हैं.
२. तोते की चोंच खुली है.
३. तोते की गर्दन पर लाल पट्टी है.
४. लड़की की आंखें खुली हैं.
५. लड़की मुस्कुरा रही है.
६. फ्रॉक पर सितारे बने हैं.
७. लड़की के कंगन पर हीरे जड़े हैं.
८. कुत्ते की जीभ बाहर है.
९. प्लेट पर पारले का नाम लिखा है.
१०. प्लेट में मैंगोबाइट रखी है.





# *Now Writing is a pleasure with* LION **Novelty**

*Introducing the winning edge*

## NEW RANGE OF FANCY PENCILS.

*Lion's* **Novelty** *Pencils have* **Mythologies** *from the* **Ramayan, Mahabharat** *and* **Shri Krishna Leela** *in colourful pictures. Making it interesting and easier for children to understand ethics.*





*Decorative pencils with* **Birthday** *Greeting messages,* **Rainbow** *colours and* **Alphabets** *are a silent language of love.*







*Pencils with action-packed pictures of the* **Turtles, Hi.... Cat** *and* **Ping Pong** *brim* **'YOUNG SMARTIES'** *with overpowering confidence.*






LION
**PINKY**
PENCILS

**Pinky,** *the charming beauty garbed in floral attire is all ready to allure every young boy and girl in town. She has claimed 'The Beauty And The Brain Pencil' title already.*






Manufactured by
**LION PENCILS LTD.,**
MARKETING DIVISION
95, PARIJAT, MARINE DRIVE, BOMBAY-400 002. TEL: 296856, 2089926



# एक्को-सहाय्येन मुख-छद्माकृतीः कुरुत।



एक्को-रेखाटन-लेखन्या (स्केच पेन) मुख-छद्माकृतीनां निर्माणं न केवलं सुकरम्, अपि तु नितरां मनोविनोदनपरमपि।

समुज्ज्वलवर्णाः एक्को-लेखन्यः १२, २४, ३० इति संख्यात्मकेषु आवेष्टनेषु उपलब्धाः सन्ति।

अयं पुनरत्र विशेषः यत् एक्को-लेखन्यः जलाधारिताः निर्विषाश्च भवन्ति।

तस्माद् एव तासाम् उपयोगः सर्वथा सुरक्षितः।

विचार्यतां तावत्, कियान् भवेत् अम्बायाः प्रमोदः युष्माकं छद्माकृतीः विलोकयन्त्याः।

एवं एक्को नाम अक्षय्यः आनन्दः।

विजयभ्यः सहस्रशः पारितोषिकाणि।



Ekco®

युष्माकं चित्रकलाभिव्यक्तेः सर्वोत्तमं साधनम्।





# चन्दमामा

डिसेम्बर्-१९९३

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००
वार्षिकं ग्राहकशुल्कं रू. ४८-००




# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सञ्चालकः– 'नागिरेड्डी'

## सर्वधर्माणां निमित्तम् अपूर्वा नीतिः



"अस्माभिः अन्ये तादृशेन आदरेण द्रष्टव्याः, यादृशेन आदरेण अन्ये अस्मान् पश्येयुः इति वयम् इच्छामः" इति घोषणा गते सप्टम्बर्मासे चिकागोनगरे प्रवृत्ते द्वितीये विश्वधर्मसम्मेलने कृता। एतच्च सम्मेलनं तस्मिन् स्थले, तस्मिंश्च दिनाङ्के प्रवृत्तं, यस्मिन् स्थले यस्मिंश्च दिनाङ्के शतात् वर्षेभ्यः पूर्वं प्रथमं विश्वधर्मसम्मेलनं प्रवृत्तम्। तस्मिन् प्रथमे सम्मेलने अस्मद्देशस्य प्रतिनिधित्वेन स्वामी विवेकानन्दः भागम् ऊढवान् आसीत्। अतः तत् सम्मेलनम् अविस्मरणीयं सञ्जातम्।

एतस्मिन् द्वितीय-विश्वधर्मसम्मेलने हिन्दुधर्मप्रतिनिधयः, बौद्ध-जैन-सिक्खप्रतिनिधयः इस्लां-क्रैस्तप्रतिनिधयः, झेरोस्ट्रियन्-प्रतिनिधयः इत्यादयः १२५ प्रतिनिधयः भागं गृहीतवन्तः आसन्। तैः ऐकमत्येन निर्णीतं यत् पूर्वनिर्दिष्टा घोषणा विश्वधर्मघोषणा स्यादिति, घोषणायां प्रतिपादिता नीतिः सर्वैः अनुष्ठेया इति च।

अहिंसामार्गेण सर्वेषां विवादानां परिहारस्य चिन्तनम्, प्रकृतौ आदरं तस्याः रक्षणे प्रयत्नं च, स्त्रीपुरुषसमतां चापि एषा घोषणा प्रतिपादयति। नवपुटात्मिकायाम् एतस्यां घोषणायां कुत्रापि 'देव'शब्दः न प्रयुक्तः। ये देवे न विश्वसन्ति ते अपि एतस्याः घोषणायाः व्याप्तौ अन्तर्भवन्तु इति उद्देशेन एवं कृतम्।

स्वामिनः विवेकानन्दस्य तात्त्विकचिन्तनस्य अनुगुणम् एव अस्ति एषा घोषणा। दलैलामावर्येण यथा आशा प्रदर्शिता तथा, एषा घोषणा विश्वशान्तौ विश्वसती विश्वस्य कासाञ्चित् समस्यानां परिहारे उपकुर्यात् एव।

द्विसहस्रात् वर्षेभ्यः पूर्वं क्रिस्तवर्येण उक्तम् आसीत्– "आत्मनः निमित्तं भवान् यत् इच्छति तत् अन्यस्मै ददातु," इति। शोचनीयः अयं विषयः यत् धार्मिकग्रन्थैः बहुधा प्रतिपादिता अतिसामान्या एषा नीतिः अपि अद्य धर्मप्रमुखैः स्मारणीया आपतिता इति।

सम्पुटः–१० डिसेम्बर्–१९९३ सञ्चिका–९

प्रतिकृतिमूल्यं रू. ४-०० * वार्षिकं ग्राहकशुल्कं रू. ४८-००



# नामनिर्वचनम्-१२

*[निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते।]*

**अच्युतः—** न च्यवते=स्वरूपतो न गच्छति यः सः। (च्यु+कर्तरि क्त+नञ्समासः) अच्युतः नाम भगवान् विष्णुः। सः स्थिरः शाश्वतः। तस्य स्वरूपतः च्युतिः (विकारः) न भवति। अतः सः अच्युतः इति उच्यते।

**प्रभा—** प्रकर्षेण भाति इति प्रभा। [प्र+भा(दीप्तौ)+अङ्] या अतिशयितया शोभया शोभते सा प्रभा इति तात्पर्यम्। प्रकाशः, कान्तिः, सूर्यकिरणः इत्यादयः प्रभाशब्दस्य अर्थाः। सूर्यस्य पत्न्याः नाम प्रभा इति। प्रभानामकः वृत्तविशेषः छन्दःशास्त्रे प्रसिद्धः अस्ति।

**प्रभाकरः—** प्रभां करोति इति प्रभाकरः। [प्रभा+(डु)कृञ्(करणे)+टः] सूर्यः किरणैः लोके प्रकाशं प्रसारयति। अतः सः प्रभाकरः। रघुवंशः एतद्विषये एवं वदति— 'कृशानुरपधूमत्वात् प्रसन्नत्वात् प्रभाकरः' इति।

प्रभाकरशब्दस्य, अग्निः, चन्द्रः, समुद्रः इत्यादयः अर्थाः अपि सन्ति। मीमांसाशास्त्रे प्रभाकरः नाम कश्चित् शास्त्रज्ञः प्रसिद्धः। अतः तत् शास्त्रं प्राभाकरमतम् इत्येव प्रसिद्धम्।

**मकरन्दः—** मकरम् अपि अन्दति बध्नाति धारयति इति वा मकरन्दः। [मकर+अदि(बन्धने)+अण्] अन्या अपि व्युत्पत्तिः एतस्य शब्दस्य दृश्यते— मकरम् अपि द्यति कामजनकत्वात् [मकर-द्यो(अवखण्डने)+कः] इति मकरन्दः।

मकरन्दः नाम पुष्परसः। मकरन्दः माधुर्य-सौगन्ध्यादिकारणतः मकरम् अपि आकर्षति इति तात्पर्यं मनसि निधाय द्विविधा व्युत्पत्तिः प्रदर्शिता दृश्यते।

---

*सूचना— भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।*

**सङ्केतः- संस्कृतचन्दमामा 'अक्षरम्' ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु-५६००८५.**

वार्ताविशेषः–

# शत्रवः सुहृदः जाताः





यहूदीयानां पालिस्तीनीयानाम् अरबजनानां च कलह-युद्धादयः दीर्घकालात् अनुवर्तमानाः आसन्। किन्तु गते सप्टम्बर्मासे १३ दिनाङ्के ते ऐतिहासिकसन्धेः कारणतः सुहृदः जाताः। एषः सन्धिः वाशिंगटन्नगरे विश्वनेतॄणाम् सम्मुखे घटितः। इस्रेलूदेशीयः विदेशाङ्गमन्त्री षिमोन् पेरिज्वर्यः, पालिस्तीनविमोचनसंस्थायाः (पी.एल्.ओ.) राजनीतिविभागाध्यक्षः मोहम्मद् अब्बास् च एतस्मिन् सन्धौ हस्ताङ्कनं कृतवन्तौ। इस्रेलूदेशस्य प्रधानः इजाक् राबिन्, पालिस्तीनविमोचनसंस्थायाः अध्यक्षः यासर् अराफत् च एतत्सन्दर्भे परस्परं करं योजयन्तौ सन्धिविषये सहमतिं प्रदर्शितवन्तौ।

शरणं सम्प्रार्थ्य आगताः यहूदीयाः पालिस्तीनप्रदेशे वासं प्राप्तवन्तः। किन्तु कालान्तरे ते अरबजनान् ततः बहिः प्रेषितवन्तः।

एतस्य परिणामतः शताधिकवर्षाणि यावत् हिंसात्मकं युद्धं प्रवृत्तम्। रक्तधाराप्रवाहः निर्गतः। एतस्य सन्धेः परिणामतः गाजा-खातस्य पश्चिमतीरे निवसन्तः ३,००,००० पालिस्तीनीयाः स्वयंपरिपालनाधिकारं प्राप्तवन्तः। वर्षद्वयाभ्यन्तरे पूर्णरूपेण क्रियान्विततां प्राप्यमाणस्य सन्धेः प्रथमं सोपानम् एतत्।

२२ मासेभ्यः पूर्वं संयुक्तराष्ट्रसङ्घेन उपस्थापितस्य प्रस्तावस्य परिणामतः एतस्य सन्धेः अङ्कुरोत्पत्तिः जाता। संयुक्तराष्ट्रसङ्घस्य प्रस्तावस्य सारः यत्– पालिस्तीनीयाः इस्रेलीयाः च सम्भूय जेरुसलेमतः आगतानाम् आश्रयार्थिनां, सीमादीनां च विषये समालोच्य समस्यायाः परिहारं प्राप्नुयुः इति।

१९१७ तमे वर्षे नवम्बर्मासस्य द्वादशे दिनाङ्के बाल्फर्घोषणायाः परिणामतः यहूदीयानां पालिस्तीनीयानां च मध्ये कलहः आरब्धः। राष्ट्रसमुदायस्य आदेशस्य अनुसारं तत्काले ब्रिटन् पालिस्तीनशासनभारं निर्वहति स्म। तदा ब्रिटन्-विदेशाङ्गसचिवः आर्थर् बाल्फर्वर्यः समर्थितवान् यत् यहूदीयानां मातृभूमिः स्यात् इति। इतः पूर्वं तु यहूदीयानां स्वतन्त्रमातृभूमिप्राप्तीच्छा न आसीत्। घोषणायाः अनन्तरं तु ते उद्घोषितवन्तः यत् समग्रः

पालिस्तीनप्रदेशः अस्माकं मातृभूमिः इति। ते क्रमशः पालिस्तीनदेशे वासं कुर्वन्तः तत्रत्यान् अरबजनान् ततः निष्कासितवन्तः।

द्वितीयजागतिकयुद्धस्य (१९३९-१९४५) समाप्तिसमये पालिस्तीनीयानाम् अपेक्षया अपि यहूदीयानां सङ्ख्या अधिका जाता आसीत्। यहूदीयानां मातृभूमिप्राप्तीच्छा दिने दिने प्रवृद्धा। १९४८ तमे वर्षे मेमासस्य १४ दिनाङ्के एकपक्षीयतया ते घोषितवन्तः यत् इस्रेल्राज्यं स्वतन्त्रं जातम् इति। ततः १९८८ तमवर्षान्तं यावत् यहूदीयानां पालिस्तीनीयानां च मध्ये घोरं युद्धं प्रवृत्तम्।

१९६७ तमे वर्षे इस्रेल्देशः ईजिप्ट्देशं, सिरियादेशं, जोर्डान्देशं च पराजयत्। गाजाखनीं सिनायप्रदेशं, जोर्डान्नद्याः पश्चिमतटप्रदेशं च स्वाधीनम् अकरोत्।

१९७३ तमे वर्षे ईजिप्ट्-इस्रेल्देशयोः युद्धं जातम्। तदा ईजिप्ट्देशेन सिनायप्रदेशः प्रतिप्राप्तः। तत्काले एव लेबनानदेशस्य बेरूटनगरे पालिस्तीनीविमोचनसंस्थायाः (पि.एल्.ओ.) स्थापनं जातम्। ततः आरभ्य सा संस्था स्वमातृभूमेः विमोचनार्थं प्रयत्नं कुर्वती अस्ति। एतस्य गेरिल्लायुद्धतन्त्रस्य सम्मुखीकरणार्थं १९८२ तमे वर्षे इस्रेल्देशेन लेबनान्देशस्य उपरि आक्रमणं कृतम्। अतः पालिस्तीनविमोचनसंस्थया स्वकार्यालयः दुनीशियां प्रति नीतः। १९८८ तमे वर्षे जोर्डान्देशः उदघोषयत् यत् जोर्डान्नद्याः पश्चिमतीरस्थः प्रदेशः पालिस्तीनीयानां सम्पत्तिः इति।

१९९० तमे वर्षे अमेरिका-रशियादेशौ पालिस्तीनीयान् यहूदीयान् च बोधितवन्तौ यत् परस्परचर्चया समस्यायाः परिहारः प्राप्तव्यः इति। संयुक्तराष्ट्रसङ्घेन एषः प्रस्तावः समर्थितः। १९९१ तमे वर्षे स्पेन्देशे चर्चायाः आरम्भः जातः। द्वाविंशतिः मासाः अतीताः। पि.एल्.ओ. अध्यक्षः यासर् अराफत्वर्यः नार्वेदेशं मध्यस्थं कृत्वा इस्रेल्नेतृभिः सह गुप्तवार्तालापं कृतवान्। अराफत्वर्यः पत्रं प्रेषितवान् यत् इस्रेल्देशस्य स्वतन्त्रस्थितिः अङ्गीक्रियते इति। ततः तात्कालिक-शान्तिसन्धेः अंशाः चर्चिताः। सन्धिस्वरूपं निर्णीतं च।




सन्धिस्वरूपनिर्णयमात्रेण मैत्री उत्पन्ना इति न। एतस्य प्रयत्नस्य फलतः परिहारविषये वार्तालापार्थम् अनुकूलकरः सन्निवेशः निर्मितः अभवत्। वार्तालापाः यदा प्रवृत्ताः तदा परस्परसन्देहादयः अपि सहजतया उत्पन्नाः। वार्तालापेन एव ते सन्देहाः उभयपक्षीयैः निवारिताः। ततः सन्धिप्रस्तावः अन्तिमघट्टं प्राप्नोत्।

अमेरिकाध्यक्षः बिल् क्लिण्टन् अराफत्वर्यं राबिन्वर्यं च निवेदितवान् यत् हस्ताङ्कनेन सन्धेः प्रमाणीकरणार्थं वाषिंग्टन्नगरं प्रति आगन्तव्यम् इति। हस्ताक्षरैः सन्धिः यदा प्रमाणीकृतः तदा क्लिण्टन्वर्यः– "काचित् ऐतिहासिकी घटना इदानीं प्रत्यक्षं दृष्टा अस्माभिः। अद्यतनं दिनम् अध्यक्ष(अराफत्)-प्रधानयोः(राबिन्)। किन्तु अग्रिमः कालः एतेषां सर्वेषाम्" इति उक्तवान्– तत्र सम्मिलितान् यहूदीय-पालिस्तीनीयबालान् प्रदर्शयन्।

**शत्रवः अपि परस्परवार्तालापेन चर्चया च समस्यायाः परिहारं प्राप्य सुहृदः भवितुम् अर्हन्ति इत्येतम् अंशं प्रमाणीकरोति एषः ऐतिहासिकः सन्धिः।**



# सज्जनत्वपरीक्षा

लक्ष्मीः गोविन्दपुरनामके ग्रामे जाता तरुणी। सा न केवलं सुन्दरी, अपि तु बुद्धिमती अपि। यदा सा प्राप्तवयस्का जाता तदा सज्जने सरले प्रतिवेशिनि रामे अनुरक्ता अभवत्।

एतत् ज्ञात्वा सोमः तस्याः समीपं गत्वा उक्तवान्– "सः रामः न तीक्ष्णमतिः। यदि भवती मां परिणयेत् तर्हि राजकुमारी इव सुखेन जीवेत्" इति।

"रामः तीक्ष्णमतिः न स्यात् नाम। किन्तु सः नितरां सज्जनः। तादृशः उत्तमः जनः अस्माकं ग्रामे अन्यः नास्ति एव" इति उक्तवती लक्ष्मीः।

"अनुरागः अन्धः इति जनाः वदन्ति। अतः भवती चिन्तयति तु रामः अत्युत्तमः इति। यदि रामस्य मम च निमित्तं परीक्षा आयोज्येत तर्हि कतरः उत्तमः इति ज्ञायेत" इति उक्तवान् सोमः।

लक्ष्मीः रामाय सोमाय च दश रूप्यकाणि दत्त्वा– "नगरं गत्वा मम इष्टतरम् आनयताम्" इति उक्तवती। सा रामं पुनः उक्तवती– "भवान् यत् आनयति तदेव प्रियतमं मम। भवान् कदापि सज्जनत्वं मा त्यजतु। तेन भवतः श्रेष्ठत्वं सिद्ध्यति" इति।

'रामः यत्किमपि आनयति चेदपि तत् लक्ष्म्याः प्रियं स्यात् एव। अतः सः किमपि आनेतुं यथा न शक्नुयात् तथा करणीयम्' इति आलोच्य सोमः एतत्कार्यसाधनार्थम् एकं स्नेहितं नियोजितवान्।

उभौ अपि अरण्यमार्गेण प्रस्थितवन्तौ। किञ्चिद्दूरं यदा गतं तदा सोमः रामम् उक्तवान्– "अत्रैव समीपस्थे वृक्षकोटरे मया पूर्वं शतं रूप्यकाणि स्थापितानि आसन्। एकाकी गत्वा तत् धनम् आनेष्यामि। भवान्



अत्रैव तिष्ठतु।यदा भवान् एकाकी अत्र तिष्ठति तदा चोराः आगच्छेयुः। अतः लक्ष्म्या दत्तं धनं मह्यं ददातु। अहं तत् रक्षामि। भवदीयं धनं भवत्समीपे एव तिष्ठतु नाम" इति उक्त्वा रामसकाशात् दश रूप्यकाणि स्वीकृत्य ततः निर्गतवान्।

एतावत्पर्यन्तं गुप्तरूपेण अनुसरन् आगतः स्नेहितः वृक्षाणां मध्ये रहसि सोमेन मिलितवान् ततः सोमस्य सूचनायाः अनुगुणं रामसमीपं गत्वा छुरिकां प्रदर्शयन् भयं जनयन् रामसमीपस्थं समग्रं धनम् अपहृत्य सोमाय दत्तवान्। किञ्चित्कालानन्तरं सोमः रामसमीपम् आगतवान् च।

रामः खेदेन प्रवृत्तं सर्वं निवेद्य– "भवता यथा उक्तं तथैव प्रवृत्तम्। मम समग्रं धनं चोरेण अपहृतम्। लक्ष्म्या दत्तं धनं भवते दत्तवान् आसम् इत्यतः तावन्मात्रम् अवशिष्टम्" इति उक्तवान्।

उभौ अपि नगरं गतवन्तौ। कश्चन सुवर्णापणः ताभ्यां गतः। सोमः एकम् आभरणं दशभिः रूप्यकैः क्रीतवान्। तादृशम् एव आभरणं रामः अपि क्रेतुम् इष्टवान्। तदा स्वर्णकारः उक्तवान्– "सोमवर्यः इतः पूर्वं मम उपकारं बहुधा कृतवान् आसीत्। अतः तस्मै तत् आभरणं निश्शुल्कं दातव्यम् इति मम इच्छा। किन्तु सोमवर्यः एतत् न अङ्गीकरोति इत्यतः ततः दश रूप्यकाणि स्वीकृतानि। एतस्य आभरणस्य वास्तविकं मूल्यं द्विशतं रूप्यकाणि" इति।

'सोमेन यादृशम् आभरणं क्रीतं ततोऽपि उत्तमम् आभरणम् अन्यत् वा मया क्रेतुं न शक्यते' इत चिन्तयित्वा रामः किमपि न क्रीतवान् एव। सोमः अनन्तरम् आपणस्य अन्तर्भागं गत्वा आभरणार्थं यावत् दातव्यम् आसीत् तावत् आपणिकाय दत्त्वा– "मया यथा उक्तं तथा व्यवहृतं भवता। तदर्थं धन्यवादाः" इति उक्त्वा बहिः आगतवान्।

अनन्तरम् उभौ अपि ग्रामं प्रति प्रस्थितवन्तौ। मार्गे सोमः रामम् उक्तवान्– "बुद्धिहीनताकारणतः भवदीयं समग्रं धनं नष्टम्। भवन्तं परिणीय लक्ष्मीः कदापि

सुखेन स्थातुं न शक्नुयात्। अतः मद्विषये लक्ष्मीं सम्यक् बोधयित्वा सा मां यथा परिणयेत् तथा करोतु" इति।

"भवतः वचनं युक्तम् एव। भवान् बुद्धिमान्। भवतः परिणयेन सा सुखेन जीवेत्" इति उक्तवान् रामः।

अरण्यप्रदेशम् अतिक्रम्य यदा तौ ग्रामसमीपम् आगतवन्तौ तदा कस्यचित् वृक्षस्य अधः उपविष्टः भिक्षुकसदृशः अनाथः ताभ्यां दृष्टः। सः वार्तालापात् एतयोः नामादिकं ज्ञात्वा– "विपद्ग्रस्तानां साहाय्यं करणीयम् इति काचित् देवता माम् आदिष्टवती अस्ति। अतः एतस्मै रामाय एतं वज्रहारं ददामि" इति उक्त्वा सुन्दरं वज्रहारं रामाय दत्त्वा "यः सज्जनत्वं न त्यजति तस्य साहाय्यं देवाः अपि कुर्वन्ति इति स्मरतु" इति रामम् उक्त्वा ततः निर्गतवान्।

उभौ अपि लक्ष्म्याः समीपम् आगतवन्तौ। रामेण यत् आभरणं समर्पितं तस्य पुरतः सोमेन आनीतम् आभरणं कान्तिहीनं दृश्यते स्म। तदा सोमः लक्ष्मीम् उक्तवान्– "रामस्य श्रेष्ठता एतावता न प्रमाणीकृता। अदृष्टबलात् तेन जयः प्राप्तः, न तु स्ववैशिष्ट्येन" इति।

"सज्जनः एव श्रेष्ठत्वेन परिगण्यते। सज्जनम् एव अदृष्टम् उपकरोति। अत्र यदि भवतः विश्वासः नास्ति तर्हि एतदर्थम् अपरां परीक्षाम् आयोजयिष्यामि" इति उक्तवती लक्ष्मीः।

अनन्तरदिने पुनरपि लक्ष्मीतः दश





रूप्यकाणि प्राप्य राम-सोमौ नगरं प्रति प्रस्थितवन्तौ। दिनद्वयात् पूर्वं रामेण यः अनुभवः प्राप्तः सः अनुभवः एतत्सन्दर्भे सोमेन प्राप्तः। अरण्ये चोराः सोमस्य समग्रं धनं चोरयित्वा पलायनं कृतवन्तः।

ततः उभौ अपि नगरं प्राप्य स्वर्णापणं गतवन्तौ। आपणिकः रामं दृष्ट्वा– "श्रीमन्! भवतः मुखे अदृष्टदेवता नृत्यति इव। भवादृशः यदि मम आपणात् किमपि स्वीकुर्यात् तर्हि मम सौभाग्यं सेत्स्यति" इति उक्त्वा रामाय एकम् आभरणं दत्तवान्।

निश्शुल्कम् आभरणं प्राप्तुम् अनिच्छन् रामः आपणिकाय दश रूप्यकाणि दत्तवान्। इतोऽप्यधिकतया यावत् दातव्यं तावत् धनम् आपणिकाय रहसि दत्त्वा सोमः रामम् अनुसृतवान्। ततः तौ प्रतिप्रस्थितवन्तौ।

यदा ग्रामसीमा प्राप्ता तदा पूर्वं दृष्टः अनाथः एव अद्यापि उपविष्टः आसीत्। प्रवृत्तं सर्वं सः एतयोः मुखात् ज्ञातवान्।

सोमः कृत्रिमाश्रूणि स्रावयन् दुःखम् अभिनयन्– "श्रीमन्! अरण्ये चोराः मदीयं समग्रं धनम् अपहृतवन्तः। ते यथा न पश्येयुः तथा मया किञ्चित् धनं गोपितम् आसीत्। तच्च धनं नगरे व्ययितम् अभवत्" इति उक्तवान्।

तदा सः अनाथः– "भवान् विपद्ग्रस्तः स्यात्, किन्तु दुरदृष्टवान्। दुरदृष्टवतः साहाय्यं सर्वथा व्यर्थम्। एषः रामः सज्जनः अदृष्टशाली च। 'एतादृशस्य एव साहाय्यं करोतु' इति अद्य प्रातः अदृष्टदेवता माम् आज्ञापितवती" इति उक्त्वा अपरं वज्रहारं रामाय दत्त्वा ततः निर्गतवान्।

ततः उभौ अपि लक्ष्म्याः समीपं गतवन्तौ। रामेण दत्तं वज्रहारं स्वीकृत्य सोमम् उक्तवती लक्ष्मीः– "रामः यद्यपि दुरदृष्टग्रस्तः आसीत्, किन्तु अदृष्टस्य साहाय्येन तस्य कष्टम् अपगतम्। भवतः दुरदृष्टं तु तथैव अवशिष्टम्। सज्जन-तदितरयोः भेदः एषः एव" इति।

एतत् श्रुत्वा खेदेन निर्गच्छन्तं सोमं प्रत्याहूय लक्ष्मीः अन्तः गत्वा पूर्वदिने तेन दत्तम् आभरणं तस्मै प्रतियच्छन्ती– "एतस्य

स्वीकारः न न्याय्यः। एतत् भवान् भाविन्यै पत्न्यै ददातु'' इति उक्तवती।

''किमर्थं तथा? भवतीम् अहं परिणेतुं न शक्तवान् चेदपि प्रीत्या आभरणं न दातव्यम् इति नियमः नास्ति खलु?'' इति पृष्टवान् सोमः।

''परद्रव्यम् अहं कदापि मत्समीपे न स्थापयामि। भवान् गमनसमये भवतः गृहस्य पार्श्वे निवसन्तीं कमलाक्षीम् अत्र प्रेषयतु। रामः यत् वज्रहारद्वयम् अर्पितवान् तदुभयं तस्याः, कृत्रिमं च। तत् तस्यै दातव्यं मया। यतः तत् परद्रव्यम्'' इति उक्तवती लक्ष्मीः।

तदा सोमः अत्याश्चर्येण— ''कीदृशम् अन्याय्यम् एतत्! भवतीं अनाथवत् अभिनयन्तं कञ्चित् वज्रहारदानार्थं प्रेषितवती खलु? सर्वः एषः कपटव्यवहारः भवत्याः'' इति उक्तवान्।

''भवता यादृशः व्यवहारः कृतः तादृशः एव व्यवहारः मया अपि कृतः। मां वञ्चयितुम् इच्छन् भवान् कमलाक्ष्याः अग्रजम् उक्तवान् आसीत् खलु— चोरवत् व्यवहरतु इति? कमलाक्षी भवति अनुरक्ता अस्ति। सा मां सर्वं निवेदितवती। अतः अहं तस्याः अग्रजस्य द्वारा एव अनाथव्यवहारं कारितवती। वेषपरिवर्तने सः नितरां समर्थः इत्यतः तं भवान् अभिज्ञातुं न शक्तवान्। अस्तु तावत्, मां पराजेतुम् इच्छन् भवान् वञ्चनामार्गम् आश्रितवान्। अन्यथा भवान् सज्जनः इति अहं जानामि। अनुरक्तां गुणवतीं कमलाक्षीं परिणीय सुखेन जीवतु तावत्'' इति उक्तवती लक्ष्मीः।

कमलाक्षी स्वस्मिन् अनुरक्ता अस्ति इति जानाति स्म सोमः। तथापि लक्ष्मीं परिणेतुम् इच्छन् सः वञ्चनामार्गम् आश्रितवान् आसीत्। इदानीं लक्ष्म्याः वचनतः सः विवेकं प्राप्य स्वकृत्यार्थं लक्ष्मीं क्षमां प्रार्थितवान्। कमलाक्षीं परिणेतुं निश्चितवान् च।

ततः लक्ष्मी-रामयोः, कमलाक्षी-सोमयोः च विवाहः प्रवृत्तः। ते सखेन दीर्घकालं जीवितवन्तः।



# शुकप्रियता

बहुपूर्वं विद्यानगरे चन्द्रकान्तः नाम कश्चन युवकः आसीत्। सः राजास्थाने उद्योगं प्राप्तुं प्रयतमानः आसीत्। आस्थानस्य विषयं जानन् कश्चित् तम् उक्तवान्– "राजधान्यां जिह्वेन्द्रनाथः नाम कश्चित् अस्ति। सः पक्षिप्रियः इति श्रूयते। तं तोषयन् उद्योगप्राप्त्यर्थं प्रयत्नं करोतु भवान्" इति।

विचारणात् चन्द्रकान्तः ज्ञातवान् यत् जिह्वेन्द्रनाथस्य जन्मदिनोत्सवः आसन्नः इति। अतः सः एकम् उत्तमं शुकं क्रीतवान्। जिह्वेन्द्रनाथस्य जन्मदिनोत्सवदिने राजधानीं गत्वा जिह्वेन्द्रनाथं दृष्ट्वा तस्मै शुकम् उपायनरूपेण अर्पितवान्। "जन्मदिनस्य हार्दाः शुभाशयाः" इति अवदत् शुकः।

जिह्वेन्द्रनाथः शुकम् आश्चर्येण पश्यन्– "धन्यवादाः" इति उक्तवान्। तदा शुकः अपि– "धन्यवादाः" इति प्रतिवचनम् अवदत्।

चन्द्रकान्तः स्वस्य उद्योगप्राप्तीच्छां जिह्वेन्द्रनाथं निवेदितवान्। "सप्ताहानन्तरं पुनः आगत्य मां पश्यतु" इति उक्तवान् जिह्वेन्द्रनाथः।

निश्चिते दिने जिह्वेन्द्रनाथं पुनः दृष्टवान् चन्द्रकान्तः। मन्दहासपूर्वकं वार्तालापं कुर्वन् जिह्वेन्द्रनाथः– "आगामिसोमवासरे आगत्य उद्योगिपदम् अलङ्करोतु" इति उक्तवान्।

"महान् अनुग्रहः कृतः तत्रभवता" इति सन्तोषेण विनयेन च उक्त्वा चन्द्रकान्तः जिह्वेन्द्रनाथं पृष्टवान्– "मया उपायनीकृतः शुकः भवते अरोचत खलु?" इति।

"अथ किम्? पक्षिषु शुकस्य मांसे मम विशेषरुचिः। अतः यस्मिन् दिने भवता शुकः दत्तः तस्मिन् एव दिने तदीयेन मांसेन व्यञ्जनं कारयित्वा भक्षितवान्" इति उक्तवान् जिह्वेन्द्रनाथः।






७

(राज्ञः प्रतापवर्मणः अपेक्षायाः अनुगुणम् उत्तुङ्गः मित्रैः सह गत्वा शताब्दिकापुष्पाणि सङ्गृह्य आगतवान्। तावता नौका सन्नद्धा आसीत्। पर्वतकुलीयानां नायकः शुम्भः, भगिनी रजनी, चत्वारि मित्राणि च उत्तुङ्गं समुद्रपर्यन्तम् अनुसृत्य आगत्य शुभप्रयाणम् आशंसितवन्तः। उत्तुङ्गः नौकायां शताब्दिकापुष्पाणि आरोप्य राक्षसस्य अन्वेषणं कुर्वन् समुद्रस्य मध्यभागं प्राप्तवान्। तदनन्तरम्....)

उत्तुङ्गः नौकाचालने अनुभवी न। शृङ्गमयपर्वतस्य झरीषु सः विहारार्थम् उडुपं चालितवान् आसीत्। तथैव तत्प्रदेशे स्थितायाम् एकमात्रनद्यां चित्रावत्यां कदाचित् विहारं कृतवान् आसीत्। तस्य जीवने नौकाचालनसन्दर्भः इतः पूर्वं न आगतः आसीत्। उडुपचालनं यः जानाति सः नौकाम् अपि विना क्लेशं चालयितुं शक्नोति इति तस्य दृढः विश्वासः आसीत्। राक्षसमृगस्य पीडातः माणिक्यपुरी रक्षणीया इति उद्देशेन सः कार्ये प्रवृत्तः आसीत्। दृढसङ्कल्पवन्तः प्रयत्नशीलाः लघुविघ्नान् कदाचिदपि न परिगणयन्ति खलु?

समुद्रे यदा किञ्चिद्दूरं गतं तदा तरङ्गाणां वेगः न्यूनः जातः। लघुतरङ्गाणाम् उपरि नौका अग्रे गता। इतोऽपि अग्रे यदा गतं तदा



नौका निश्चलजलं प्राविशत्। उत्तुङ्गः चालनदण्डस्य साहाय्येन नौकां चालयन् अग्रे गतवान्।

सूर्यः अस्तंगतः। अन्धकारः सर्वत्र प्रसृतः। क्रमशः सः तीव्रतां गतः। आकाशः मेघरहितः स्वच्छः आसीत्। अतः नक्षत्राणि स्फुटं विराजन्ते स्म। 'राक्षसः मृगः समुद्रमध्यात् यदाकदाचित् यतःकुतश्चित् अपि उद्भवितुम् अर्हति' इति एतत् स्मरन् उत्तुङ्गः परितः दृष्टिं प्रसारयन् जागरूकतया नौकां चालयन् आसीत्।

बहुदूरं यदा गतं तदा सुदूरे कश्चन अस्पष्टः आकारः दृष्टिगोचरः जातः। सः क्रमशः विशालतां प्राप्नुवन् नौकाम् अभिलक्ष्य एव आगच्छन् आसीत्। 'कृष्णवर्णीयः एषः आकारः कः?' इति सुसूक्ष्मं परिशीलितवान् उत्तुङ्गः। तस्य आकारस्य मुखभागः न दृश्यते स्म। विशालं शिरः सुदीर्घौ बाहू, विशालं वक्षःस्थलं च स्पष्टतया अभिज्ञायते स्म। 'एषः एव सः राक्षसमृगः' इति सम्यक् अवगतवान् उत्तुङ्गः। तस्य आकारस्य चलनक्रमस्य च परिशीलनात् ज्ञायते स्म यत् सः समुद्रस्य तले भूमौ पदं स्थापयन् अग्रे आगच्छन् अस्ति इति।

समुद्रमध्ये अपरिमितशक्त्या युक्तस्य राक्षसस्य सम्मुखीकरणं दुस्साहसमात्रम् इति आलोच्य सः निश्चितवान् यत् यावत् भूभागः कश्चन न प्राप्यते तावत् राक्षसात् कथमपि आत्मा रक्षणीयः इति। अतः सः वेगेन नौकां चालयन्, राक्षसः दूरे अस्ति इत्येतम् अंशं पुनः पुनः परिशीलनात् दृढीकुर्वन् समुद्रे अग्रे गतवान्।

अल्पे एव दूरे कश्चन द्वीपः दृष्टः। 'अहो, अहं रक्षितः' इति स्वगतं वदन् उत्तुङ्गः वेगेन अग्रे गतवान्। किन्तु एषा तृप्तिः चिरकालं न स्थिता। यतः द्वीपः यदा आसन्नः तदा ज्ञातं यत् द्वीपप्रवेशः दुष्करः इति। द्वीपतीरे सर्वत्र उन्नताकाराः शिलाः आसन्। महातरङ्गाः अपि शिलया घट्टिताः सन्तः द्वीपप्रवेशम् अप्राप्नुवन्तः प्रत्यागच्छन्ति स्म। एवं तरङ्गाणां वेगसञ्चारात् नौकायाः स्थिरतासम्पादनं तत्र नितरां दुष्करम् एव

आसीत्।

समग्रम् अवधानं नौकायाः स्थिरतासम्पादनविषये एव केन्द्रीकृत्य उत्तुङ्गः द्वीपप्रवेशार्थम् अवकाशम् अपि प्रतीक्षमाणः मन्दं गच्छन् आसीत्। तावता तालवृक्षसदृशः उन्नतमहातरङ्गः तत्र उद्गतः। ततः उत्तुङ्गस्य नौका उपरि गता, शिलयोः मध्ये निलीना च। तत्काले नौका अधोमुखा जाता। अतः नौकातः पतितः उत्तुङ्गः कस्यचित् वृक्षस्य उपरि पतितवान्। नौकास्थानि पुष्पाणि उत्तुङ्गस्य उपरि विकीर्णानि अभवन्।



उत्तुङ्गः अनूहितया एतया घटनया क्षणकालं दिग्भ्रान्तः। क्षणानन्तरं सः चित्तसमतां प्राप्य झटिति उत्थाय इतस्ततः विकीर्णानि पुष्पाणि सङ्गृहीतवान्। कानिचन समुद्रजले प्लवमानानि, मन्दं दूरं गच्छन्ति आसन्। 'शताब्दिकापुष्पाणि अत्र सन्तीत्यतः राक्षसः अत्र आगच्छेत् वा?' इति विचारः सकृत् तस्य मनसि आगतः। अनन्तरक्षणे अन्यः विचारः आगतः– 'अत्र आगमनार्थं विशालः मार्गः नास्ति। अतः सः राक्षसमृगः अत्र आगन्तुं नार्हति। तर्हि राक्षसमृगस्य उपसर्पणं कथम्?' इति एवं चिन्तयन् सः किञ्चित्कालं निष्क्रियं स्थितवान्। राक्षसः कुत्रापि दृश्येत वा इति परितः परिशीलितवान्। किन्तु कुत्रापि सः न दृष्टः। दीर्घः कालः एवम् एव अतीतः।

पूर्वस्यां दिशि प्रकाशच्छाया उदिता। तदा दूरे समुद्रे राक्षसमृगस्य पृष्ठभागः दृष्टः। 'राज्ञा यथा सूचितं तथा इदानीं सूर्योदयस्य लक्षणं जानन् राक्षसमृगः समुद्रमध्यं गच्छन् अस्ति' इति निश्चितवान् उत्तुङ्गः। इतः परं सूर्यास्तपर्यन्तम् एतस्य राक्षसस्य पुनरागमनं न सम्भवति इति निश्चितवान् सः।

अनन्तरं सः अधोमुखं पतितां नौकाम् उन्नीय सम्यक् स्थापितवान्। शताब्दिकापुष्पस्य सस्यम् अन्विष्य नौकायां स्थापितवान्। शताब्दिकापुष्पाणि विकसितानि आसन्। अतः तेषां गन्धः सर्वत्र प्रसृतः आसीत्। पुष्पाणि स्थापयितुं सस्यस्य रक्षणार्थं वा योग्यं स्थलम् अत्र स्यात् वा इति



सकृत् परिशीलितवान् उत्तुङ्गः। तावता सर्वत्र प्रकाशः प्रसृतः आसीत्। श्रान्तिकारणतः उपविष्टस्य एव तस्य नेत्रे निमीलिते जाते। अल्पे एव काले गाढनिद्रायां सः निमग्नः जातः।

कियत्कालं निद्रा कृता इति तु तेन न ज्ञातम्। यदा सः जागरितः तदा अनतिदूरे एव स्त्रीणां हासध्वनिः श्रुतः। 'एषः स्वप्नः न स्यात् खलु' इति चिन्तयन् सः मुखं परिवृत्त्य दृष्टवान्। तदा षट् युवत्यः तं परितः आगत्य स्थितवत्यः। तासां वेषभूषादीनि विचित्राणि आसन्। वर्णमयानि वस्त्राणि ताभिः धृतानि आसन्। ताः हस्तं केशपाशं च पुष्पैः अलङ्कृतवत्यः आसन्। 'एताः एतद्द्वीपे निवसन्त्यः पर्वतकुलीयाः स्युः' इति चिन्तितवान् उत्तुङ्गः। तासां षण्णाम् अपि बालिकानां हस्ते शताब्दिकापुष्पाणि आसन्। ताः तानि पुष्पाणि सन्तोषेण जिघ्रन्त्यः किमपि सम्भाषणं कुर्वत्यः आसन्। ताः कया भाषया सम्भाषणं कुर्वन्ति इति न ज्ञातम् उत्तुङ्गेन। अतः तासां सम्भाषणस्य विषयः अपि तेन न ज्ञातः।

पुष्पाणि यथास्थानं स्थापयित्वा एताः इतः गच्छेयुः इति चिन्तयित्वा क्षणकालं मौनं स्थितवान् उत्तुङ्गः। किन्तु तासां निर्गमनलक्षणं न दृष्टम्।

अतः उत्तुङ्गः ताः उद्दिश्य उक्तवान्– "अहम् एतानि पुष्पाणि इतः सुदूरे स्थितात् माणिक्यपुरीतः आनीतवान् अस्मि। कार्यविशेषस्य निमित्तं सुदूरं नयन् अस्मि अपि। अतः कृपया पुष्पाणि नौकायाम् एव स्थापयन्तु। सूर्यास्तात् अनन्तरं मया इतः निर्गन्तव्यम्" इति।

राक्षसमृगविषयस्य कथनं, तासु भीतेः उत्पादनं वा सः न इच्छति स्म।

"माणिक्यपुरी! माणिक्यपुरी!!" इति वदन्त्यः ताः हसितवत्यः। उत्तुङ्गः नौकायाः समीपं गत्वा ताः पश्यन्– "भवत्यः तानि पुष्पाणि इतः स्वीकृतवत्यः खलु?" इति साभिनयं पृष्टवान्।

अङ्गीकारपूर्वकं शिरः चालितवत्यः ताः युवतयः।



"तानि पुनः अत्रैव स्थापयन्तु कृपया" इति साभिनयं पुनः ताः युवतीः उद्दिश्य उक्तवान् उत्तुङ्गः।

ताः युवतयः निराकरणपूर्वकं शिरः चालयन्त्यः किमपि उक्तवत्यः। किन्तु ताभिः युवतीभिः यत् उक्तं तत् किञ्चिदपि न अवगतम् उत्तुङ्गेन।

सः लघु कोपमिश्रितेन स्वरेण– "तानि पुष्पाणि मदीयानि। अतः तानि सर्वाणि पुष्पाणि नौकायां स्थापयन्तु तावत्" इति उक्तवान्।

किन्तु ताः पुष्पं जिघ्रन्त्यः परस्परं मुखं पश्यन्त्यः हसितवत्यः, तावदेव। अनन्तरं तासु काचित् अग्रे आगत्य सङ्केतेन उत्तुङ्गस्य अवधानम् आकृष्य दूरस्थं किञ्चित् निर्दिष्टवती।

तस्याः अभिनयादिकं दृष्ट्वा उत्तुङ्गः ज्ञातवान् यत् वयम् एतानि पुष्पाणि स्वीकृत्य गृहं गच्छामः, भवान् आगच्छति वा इति एषा पृच्छन्ती अस्ति इति। तावता अन्याः पञ्च युवतयः ततः प्रस्थिताः आसन्।

"अस्तु, अहं भवतीभिः सह आगमिष्यामि। किन्तु तत्र गमनानन्तरं भवतीभिः पुष्पाणि मह्यं प्रत्यर्पणीयानि" इति उक्त्वा गन्तुं सिद्धः सन् उत्तुङ्गः नौकायाः दिशि दृष्टवान्। किन्तु तत्र एकम् अपि पुष्पं न आसीत्। सस्यद्वयमात्रम् अवशिष्टम् आसीत्।

यदि नौका अत्रैव तिष्ठेत् तर्हि समुद्रे उत्थितः महातरङ्गः कश्चित् एनां कुत्रापि नयेत् अपि इति आलोच्य उत्तुङ्गः नौकां किञ्चित् अग्रे नुन्नवान्। 'सस्ययोः अत्रैव त्यागः न क्षेमाय' इति आलोच्य तत् सस्यद्वयं गृहीत्वा तरुणीनां दिशि दृष्टवान्। ताः एतस्य आगमनम् एव प्रतीक्षमाणाः आसन्।

उत्तुङ्गः वेगेन पदानि स्थापयन् तासां समीपं गतवान्। तासां सम्भाषणस्य अर्थम् अवगन्तुं प्रयत्नं कुर्वन् मौनं ताः अनुसृतवान् च। उत्तुङ्गः अनुसृत्य आगच्छन् अस्ति वा न वा इति पश्यन्त्यः ताः परस्परं वार्तालापं कुर्वन्त्यः मध्ये मध्ये हसन्त्यः स्ववसतिं प्रति गतवत्यः।

अल्पे एव काले सिकतामयं तं प्रदेशम् अतिक्रम्य ते रक्तमृत्तिकामयं प्रदेशं प्राप्तवन्तः। तं प्रदेशम् उभयतः पर्वताः आसन्। तत्र सर्वत्र तृणानि, लताः, गुल्माः, लघुवृक्षाः च आसन्। एकः अपि उन्नतवृक्षः तत्र न दृष्टः। पुनः किञ्चिद्दूरं यदा गतं तदा लघुः गृहसमूहः दृष्टिगोचरः जातः। एतान् दृष्ट्वा गृहात् बहिः आगताः काश्चन एताः युवतीः किमपि पृष्टवत्यः। युवतयः लघुना उत्तरेण तासां कुतूहलं शमयन्त्यः अनतिदूरे स्थितस्य विशालकुटीरस्य समीपं गत्वा– "अम्ब! अम्ब!" इति आहूतवत्यः। मध्यवयस्का काचित् बहिः आगत्य द्वारम् उद्घाटितवती।



"अम्ब! अस्माभिः किम् आनीतम् इति पश्यतु तावत्। अतीव सुन्दरम् अस्ति खलु एतत्" इति वदन्ती आत्मना आनीतं पुष्पं प्रदर्शितवती काचित् तरुणी।

"उत्तमम् अस्ति। सुगन्धः अपि अस्ति। कुतः आनीतानि एतानि?" इति पृष्टवती सा स्त्री।

"वयं यदा समुद्रतीरं गताः तदा सः युवकः तत्र निद्रां कुर्वन् आसीत्। तस्य पार्श्वे एका नौका, नौकायाम् एतानि पुष्पाणि च आसन्। अस्मदर्थम् एव एतेन एतानि आनीतानि इति चिन्तयित्वा वयं स्वीकृतवत्यः। सः किमपि उक्तवान्। वयं तस्य वचनं न अवगतवत्यः। अतः तम् अत्र आनीतवत्यः। सः माणिक्यपुरीतः आगतवान् इति एतावत् तु ज्ञातम्। सुन्दरः अस्ति खलु सः?" इति वदन्ती उत्तुङ्गं दृष्टवती काचित् तरुणी।

"आम्। अस्तु तावत्। कौभवः आगच्छतु। सः एतेन सह वार्तालापं कृत्वा सर्वं विषयं ज्ञास्यति। भवत्यः अन्तः गच्छन्तु तावत्" इति उक्तवती सा स्त्री।

षट् अपि युवतयः एकैकशः अन्तः गतवत्यः। सा स्त्री 'उपविशतु' इति हस्तसङ्केतेन उत्तुङ्गं सूचयित्वा अन्तः गतवती।

ताभिः यः वार्तालापः कृतः सः उत्तुङ्गेन न अवगतः। तस्य गृहस्य दर्शनात् ज्ञायते यत् एतत् एतस्याः पल्ल्याः नायकस्य स्यात् इति।

अन्तः गता स्त्री स्थालिकाकारेण पात्रेण किमपि पानीयम् आनीतवती। उत्तुङ्गस्य यच्छन्ती सा उक्तवती– "भवान् श्रान्तः इव भाति। एतत् पिबतु तावत्। कौभवस्य आगमनस्य अनन्तरं तेन सह वार्तालापं कुर्वन् भोजनं कर्तुम् अर्हति भवान्" इति।

उत्तुङ्गः तस्याः वचनस्य अर्थम् अजानन् अपि आशयं जानन् तत् पात्रं स्वीकृत्य पानीयं पीत्वा पात्रम् अधः स्थापितवान्। समीपस्थम् एकं स्तम्भम् अवलम्ब्य उपविश्य अन्तः गताभिः युवतीभिः नीतानां शताब्दिकापुष्पाणां विषये चिन्तयन् स्थितवान्। "शताब्दिकापुष्पैः आकृष्टः राक्षसमृगः यदि अत्र आगच्छेत् तर्हि किं करणीयम्? समुद्रतीरे दुर्गभित्तिः इव शिलाः सन्ति। अतः ताः अतीत्य राक्षसमृगस्य आगमनं प्रायः असाध्यम्। शिलानां मध्ये यः मार्गः अस्ति तत्र राक्षसस्य प्रवेशः अपि असाध्यः एव। नौका अधोमुखं यदा पतिता तदा कानिचन शताब्दिकापुष्पाणि समुद्रे पतितानि। तेषां प्राप्त्या एव राक्षसः कदाचित् तृप्तिं प्राप्नुयात् अपि। आवश्यकतायां सत्याम् अत्रत्याः जनाः मम साहाय्यं कुर्युः।"

केनचित् भुजग्रहणपूर्वकं यदा कम्पितं तदा आलोचनालोकात् बहिः आगत्य शिरः उन्नीय दृष्टवान्।

पुरतः स्थितः कश्चन दृढकायः– "कः भवान्?" इति पृष्टवान्।

तस्य अभिनयं दृष्ट्वा एव प्रश्नस्य आशयम् जानन् उत्तुङ्गः उत्तरं दत्तवान्– "माणिक्यपुरीराज्यस्य शृङ्गमयपर्वतात् आगतवान् अस्मि। मम नाम उत्तुङ्गः इति" इति।

"शृङ्गमयपर्वतात् आगतवान् वा भवान्? महान् सन्तोषः। अन्तः गच्छाम तावत्" इति वदन् सः दृढकायः अन्तः गतवान्।

'मम भाषाम् एषः जानाति' इति जानन् उत्तुङ्गः सन्तोषेण उत्थाय तं पुरुषम् अनुसृतवान्। –(अनुवर्तते)






# चतुरः चित्रवर्णः

यत् कार्यम् आरब्धं तत् समापनीयम् एव इति निश्चित्य त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "हे राजन्! बहवः प्रयत्नाः विफलाः चेदपि भवान् निराशाम् अप्राप्नुवन् कार्यप्रवृत्तः अस्ति। अतः भवान् शक्तिमत्सु अन्यतमः इत्यत्र नास्ति सन्देहः। किन्तु शक्तिशाली, विवेकी, शूरश्चापि कश्चित् कदाचित् व्यवहारे स्खलन् प्रतीकारसाधनेच्छया कार्यप्रवृत्तः भवति। भवान् अपि यदि तादृशः एव स्यात् तर्हि सर्वे प्रयत्नाः समुद्रे वृष्टिः इव व्यर्थाः खलु? अत्र उदाहरणरूपेण चित्रवर्णनामकस्य राज्ञः कथां श्रावयामि। श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

## वेतालकथा



चित्रवर्णः सौवीरदेशस्य राजा। पितुः मरणस्य अनन्तरं सिंहासनम् आरूढवान् सः अचिरात् एव समर्थराजत्वेन ख्यातिं प्राप्तवान्। पद्मगिरिराज्यस्य राजकुमारी रागिणी स्वयंवरमण्डपे चित्रवर्णस्य कण्ठे मालां समर्पयन्ती तं परिणीतवती। रागिणी न केवलं सुन्दरी, अपि तु राजनीतिनिपुणा अपि। राज्यपालनसमये यदा समस्याः उद्भवन्ति तदा रागिणी योग्याः सूचनाः सूचयन्ती पत्युः साहाय्यम् आचरति स्म।

चित्रवर्णः न्याय्येन मार्गेण राज्यं पालयन् बहूनि जनहितकार्याणि करोति स्म इत्यतः सौवीरदेशस्य प्रजाः सुखेन आसन्। चित्रवर्णस्य शौर्यं सैन्यबलं च जानन्तः शत्रुराजाः सौवीरदेशं कटाक्षेणं अपि न पश्यन्ति स्म। अतः सौवीरदेशस्य शत्रुतः भीतिः अपि न आसीत्। एवं शत्रुभीतेः अभावतः उत्तमशासनस्य कारणतः च सौवीरदेशः दिने दिने प्रगतिं प्राप्नुवन् आसीत्।

सौवीरदेशस्य राजधान्याः अनतिदूरे स्थिते अरण्ये पुरातनः कश्चन कालिकादेवालयः आसीत्। देवालयस्य कश्चन नियमः आसीत् यत् वर्षे सकृत् राज्ञा एकाकितया तत्र गत्वा देवीपूजा करणीया इति।

एतदनुगुणं राजा चित्रवर्णः कदाचित् एकाकी अश्वम् आरुह्य कालिकामन्दिरं प्रति प्रस्थितवान्। यावत् सः अरण्यं प्रविश्य मन्दिरप्रदेशं प्राप्तवान् तावता महावृक्षाणां मध्यतः स्त्रीकृतः कश्चन आर्तस्वरः तेन श्रुतः।

चित्रवर्णः झटिति स्वरस्य दिशि अश्वं प्रेरितवान्। तत्र कश्चन राक्षसः अटविककुलोत्पन्नां तरुणीं गृहीत्वा खादितुं प्रयतमानः आसीत्।

एतत् दृष्ट्वा नितरां क्रुद्धः चित्रवर्णः तस्य समीपं गत्वा अश्वात् अवतीर्य खड्गं हस्तेन गृहीत्वा– "अये राक्षसाधम! अबलां गलितुम् उद्युक्तस्य भवतः कीदृशी लज्जास्पदता! अतिनीचे कार्ये प्रवृत्तिः भवतः। यदि धैर्यं स्यात् तर्हि युद्धे मां

पराजित्य भवान् एतस्याः खादने प्रवृत्तः भवतु" इति कठोरस्वरेण उक्तवान्।

तदा राक्षसः चित्रवर्णम् उपेक्षया पश्यन्— "सामान्यकायः भवान् मया सह किं युद्धं कर्तुं शक्नुयात्? हुं, मौनं गच्छतु तावत्" इति उक्त्वा हसितवान्।

चित्रवर्णः क्रोधेन राक्षससमीपं गतवान्। तदा राक्षसः अट्टहासं कुर्वन् तां तरुणीं भूमौ अवतार्य— "अये, स्मरतु यत् पलायनार्थं प्रयत्नः न करणीयः इति" इति उक्त्वा चित्रवर्णं पश्यन्— "भवान् कश्चन साधारणः मानवः। अहं तु महाराक्षसः। तत्रापि राक्षसोत्तमकुले जातः। बुभुक्षितरसन्दर्भे वयं धर्मानुयायिनः। 'समयोः एव समरः शोभते' इति प्राज्ञोक्तिः। ममापि तादृशे युद्धे एव आसक्तिः" इति वदन् स्वदेहं मानवप्रमाणकं कृतवान्।

एतत् दृष्ट्वा आश्चर्यम् अनुभूतवान् चित्रवर्णः। तदा राक्षसः उच्चैः हसन्— "भवान् खड्गहस्तः। अतः मया अपि खड्गः स्रष्टव्यः। किन्तु तदर्थं मन्त्रम् अहं न स्मरामि। अतः बाहुयुद्धं करवाव। खड्गं क्षिप्त्वा बाहुयुद्धार्थम् आगच्छतु तावत्" इति उक्तवान्।

चित्रवर्णः खड्गं क्षिप्त्वा बाहुयुद्धार्थं सिद्धः जातः। ततः तयोः युद्धम् आरब्धम्। यद्यपि राक्षसस्य देहबलम् अधिकं तथापि, क्रमशिक्षणं तस्य न आसीत् इत्यतः सः



श्रान्तः। एतत् जानन् चित्रवर्णः प्रहारविशेषेण राक्षसं भूमौ पातयित्वा तस्य उरसि उपविश्य तं कण्ठे गृहीत्वा मुष्ट्या ताडितवान्।

राक्षसः वेदनाकारणतः आक्रन्दनं कुर्वन् लुठन् उत्थाय— "राजन्! भवान् न केवलं धैर्यशाली, अपि तु महाबलशाली अपि" इति वदन् ततः अदृश्यः अभवत्।

ततः सा अटविकतरुणी राज्ञः पादौ गृहीत्वा— "प्रभो, मम नाम गिरिजा। अटविकनायकस्य पुत्री अहम्। पुष्पसङ्ग्रहार्थम् आगतां माम् एषः राक्षसः गृहीतवान् आसीत्। दैवेन प्रेषितः इव भवान् आगत्य मां रक्षितवान्। राक्षसम् अपि युद्धे



पराजितवान् भवादृशः महावीरः लोके अन्यः न स्यात् एव" इति उक्तवती।

राजा मन्दहासपूर्वकं ताम् उत्थापितवान्। कण्ठे मणिमालां, शिरसि विविध-पक्षिपुच्छानि च धृतवती सा वनदेवता इव शोभते स्म। ताम् आपादमस्तकं दृष्टवान् राजा तस्याः सौन्दर्यं दृष्ट्वा नितरां व्यामुग्धः अभवत्।

क्षणकालानन्तरं चित्रवर्णः तस्यां तरुण्यां लग्नां दृष्टिं बलात् परावर्त्य कालिकालयं प्रति गच्छन्– "सुन्दरि! अहं देवीं पूजयितुम् अत्र आगतः। भवती स्ववसतिं गच्छतु तावत्" इति उक्तवान्।

किन्तु गिरिजा उत्तरं किमपि अदत्त्वा महाराजम् अनुसरन्ती कालिकालयम् आगतवती। सा अपि देवीं पूजितवती। राजा पूजां समाप्य अश्वसमीपं गतवान्। गिरिजा अपि तम् अनुसृतवती।

गिरिजा किमपि वक्तुम् इच्छति इत्येतत् जानन् चित्रवर्णः– "गिरिजे! भवती किमपि वक्तुम् इच्छन्ती किन्तु वक्तुम् अशक्नुवती कष्टम् अनुभवति इति भासते। अलं सङ्कोचेन भयेन वा। एतस्य देशस्य राजा अहं भवत्याः इच्छाम् अवश्यं पूरयिष्यामि" इति उक्तवान्।

तदा गिरिजा आश्चर्यम् अनुभवन्ती– "भवान् महाराजः चित्रवर्णः वा! मन्दमत्या मया एतावत्पर्यन्तम् एतत् न ज्ञातम् आसीत्। न जाने भवान् देवीं किं प्रार्थितवान् इति। किन्तु अहं– 'शूरः एषः एव मम पतिः यथा स्यात् तथा अनुगृह्णातु' इति देवीं प्रार्थितवती" इति उक्तवती।

एतत् श्रुतवतः राज्ञः मुखं विच्छायं जातम्। यावत् सः आत्मानं निगृह्य किमपि वक्तुम् उद्युक्तः तावता पञ्चविंशतिवर्षीयः कश्चन आटविकजातीयः तरुणः तत्र आगत्य– "गिरिजे! अत्र अस्ति वा भवती? भवतीं सर्वत्र अन्विष्य कुत्रापि अप्राप्य अत्र आगतवान् अहम्" इति उक्तवान्।

गिरिजा तं तरुणं प्रवृत्तं समग्रं निवेद्य– "राक्षसमुखात् मां रक्षितवान् एषः एतस्य देशस्य महाराजः" इति उक्तवती।

सः अटविकः तरुणः राजानं नमस्कृत्य– "महाराज! गिरिजां रक्षता भवता महान् उपकारः कृतः। कृतज्ञता समर्प्यते भवते। यदि एतां राक्षसः गीर्णवान् स्यात् तर्हि अहम् आत्महत्यया इहलोकव्यापारं समापयिष्यम्। एतस्यां नितराम् अनुरक्तः अहम् एतां विना क्षणमपि जीवितुं न शक्नोमि" इति उक्तवान्।

तदा राजा मन्दहासपूर्वकं– "एवं वा? भवान् गिरिजायाम् अनुरक्तः स्यात् नाम। किन्तु गिरिजा मयि अनुरक्ता अस्ति" इति उक्तवान्।

एतत् श्रुत्वा दिग्भ्रान्तः सः तरुणः गिरिजां पश्यन् आतङ्कमिश्रितेन स्वरेण पृष्टवान्– "गिरिजे! किम् एतत् सत्यम्?" इति।

गिरिजा शिरश्चालनपूर्वकम् अङ्गीकारं सूचितवती। राजा दीर्घं निश्श्वस्य अटविकं तरुणं पश्यन् उक्तवान्– "मित्र! समस्यायाः परिहारार्थं कश्चन मार्गः अस्ति। यतः अहं राक्षसं पराजितवान् अतः गिरिजा मयि अनुरक्ता अस्ति। किन्तु यदि भवान् मां पराजयेत् तर्हि महाशूरस्य भवतः अधीना भवेत् सा" इति।

"एवं तर्हि युद्धं भवतु नाम" इति उत्साहेन उक्तवान् सः तरुणः।

राजा गिरिजां पश्यन् पृष्टवान्– "सुन्दरि! एषा व्यवस्था भवत्या अनुमन्यते खलु?" इति।

अङ्गीकारपूर्वकं शिरः चालयन्ती गिरिजा– "आम्" इति उक्तवती। ततः





महाराज-तरुणयोः युद्धम् आरब्धम्। पञ्चपेषु एव निमेशेषु तस्य तरुणस्य मुष्टिप्रहारं सोढुम् अशक्नुवन् राजा उच्चस्वरेण चीत्कुर्वन् अधः पतितवान्, मूर्च्छां प्राप्तवान् च।

क्षणकालस्य अनन्तरं राजा सचेतनः सन् उत्थाय गिरिजाम् उद्दिश्य– "भद्रे! मया पराजयः प्राप्तः। एतं तरुणं परिणीय भवती सुखेन जीवतु" इति उक्त्वा अश्वम् आरुह्य ततः निर्गतवान्।

एतदनन्तरं केषुचित् एव दिनेषु राज्ञः जन्मदिनोत्सवः आगतः। एतदङ्गतया राजधान्यां युद्धविद्यासम्बन्धिन्यः विविधाः स्पर्धाः आयोजिताः, 'स्पर्धासु येन जयः प्राप्यते तस्मै विशेषपारितोषिकं दीयते' इति राज्ञा उद्घोषितम्।

स्पर्धा प्रवृत्ता। मल्लयुद्धस्पर्धायां सः अटविकयुवकः गिरिजायाः पतिः सर्वान् पराजित्य विजयी जातः। पारितोषिकदानात् पूर्वं राजा चित्रवर्णः तं युवकं मल्लयुद्धस्पर्धार्थम् आहूतवान्।

राज्ञः व्यवहारं दृष्ट्वा गिरिजा आश्चर्यचकिता। जनाः अपि अत्याश्चर्यं प्राप्तवन्तः। 'मम पतिः एव अद्यापि जयं प्राप्स्यति' इति चिन्तयन्ती गिरिजा अत्यासक्त्या स्पर्धां पश्यन्ती आसीत्। किन्तु चित्रवर्णस्य कौशलं नैपुण्यं च सम्मुखीकर्तुम् अशक्नुवन् सः अटविकः तरुणः पराजयं प्राप्तवान्। ततः निर्गतवान् च।

वेतालः एवं कथां समाप्य अवदत्– "राजन्! गिरिजायाः विषये राज्ञः व्यवहारः विवेकपूर्णः तु न आसीत् इति खलु भाति? दर्शनमात्रेण गिरिजायाः सौन्दर्येण आकृष्टः राजा तस्यां लग्नां स्वदृष्टिं परावर्तयितुं कष्टम् अनुभूतवान्। एतस्मात् ज्ञायते खलु– सः तां परिणेतुम् इष्टवान् इति? किन्तु अटविकः युवकः यदा स्वस्य अनुरागं निवेदितवान् तदा राजा पराजयाङ्गीकारव्याजेन तां तरुणाधीनां कृतवान्। किन्तु सः एव राजा मल्लयुद्धस्पर्धायां जितवन्तं तं तरुणं स्वयं मल्लयुद्धार्थम् आहूय पराजितवान्। एतत्सर्वं किमर्थं कृतं राज्ञा? किं राजा असूयया द्वेषेण च

ग्रस्तः आसीत्? वस्तुतः तु राजा प्रायः शूरः अपि न। यतः कश्चन अटविकः तरुणः तं पराजेतुं शक्तवान्। राजा राक्षसं जितवान् यत् तत्रापि कारणं राक्षसेन स्वशक्तेः न्यूनीकरणं यत् कृतं तदेव। किन्तु आश्चर्यं नाम एषः एव राजा अन्ते तं तरुणं जितवान्। एतदर्थं सः अन्याय्यं मार्गम् आश्रितवान् स्यात् वा? एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "भीकरं महाकायं राक्षसं दृष्ट्वा अपि खड्गम् आकृष्य युद्धार्थं राजा सन्नद्धः जातः यत् तदेव तस्य शूरतां प्रदर्शयति। एतादृशः सः अटविकतरुणेन कथं जितः इति प्रश्नः उद्भवेत्। एतदर्थं प्रवृत्तं समग्रं सम्यक् परिशीलनीयम्। गिरिजायाः सौन्दर्यं दृष्ट्वा राजा यद्यपि आकृष्टः तथापि सः तां परिणेतुं निश्चितवान् आसीत् इति वक्तुं न शक्यते। तरुणस्य परीक्षां कर्तुम् इच्छन् सः तादृशं वचनम् उक्तवान्। किन्तु यदा ज्ञातं यत् तरुणः गिरिजायां दृढम् अनुरक्तः इति, तदा सः तौ योजयितुम् इच्छन् मल्लयुद्धप्रस्तावम् उपस्थाप्य पराजयम् अभिनीय ततः निर्गतवान्। एवम् अनुरूपौ तौ योजितवान् सः। अनन्तरं स्पर्धायां सः तं तरुणं पराजितवान् यत्, तत् राजतन्त्रसम्बद्धम्। यदि तस्मै पारितोषिकं दीयेत तर्हि सः जयोन्मत्तः सन् 'अहं पूर्वं राजानम् अपि जितवान् आसम्' इति सर्वत्र वदेत् अपि। एतत् राज्ञः अवमानाय खलु? अतः सः सर्वेषां सम्मुखे तं पराजितवान्। एवं राजा शक्तिशाली, नीतिनिपुणः च आसीत् इत्यत्र नास्ति सन्देहः। प्रतीकारद्वेषासूयादिभिः निर्मुक्तः आसीत् अपि सः" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



# सत्यवचनम्

वरदपुरस्य भूस्वामी वरदराजः न तीक्ष्णमतिः। कदाचित् सः मित्रेण भूस्वामिना भूपालशर्मणा सह चतुरङ्गक्रीडायां मग्नः आसीत्। तदा कश्चित् आगत्य उक्तवान्– "श्रीमन्! अहं कश्चन हस्तिपकः। मत्समीपे काचन गजा अस्ति। तस्याः पोषणभारं निर्वोढुम् अशक्नुवन् अहं तां विक्रेतुम् इच्छामि। भवादृशानां धनिकानां गृहे यदि गजा स्यात् तर्हि शोभा" इति।

एतत् श्रुत्वा प्रश्नार्थकदृष्ट्या मित्रस्य मुखं दृष्टवान् वरदराजः।

"अत्र चिन्तनीयं किम् अस्ति? 'गजः जीवति चेदपि सहस्रं रूप्यकाणि, मृतः चेदपि सहस्रं रूप्यकाणि' इति आभाणकं न श्रुतं वा भवता?" इति पृष्टवान् भूपालशर्मा।

"भवतः वचनस्य किं तात्पर्यम्?" इति पृष्टवान् वरदराजः।

"गजः यदा जीवति तदा बहुषु महाकार्येषु उपयोगाय भवति। ततः लाभः। गजः मृतः चेत् तस्य बहुमूल्यकौ दन्तौ विक्रीतौ चेत् महान् लाभः" इति उक्तवान् भूपालशर्मा।

वरदराजः गजां क्रीतवान्। कानिचन दिनानि अतीतानि। कदाचित् भूपालशर्मा मित्रदर्शनार्थं वरदराजस्य गृहम् आगतवान्। तत्समये केचन कर्मकराः मृतायाः गजायाः शरीरं प्राकारात् बहिः नयन्तः आसन्।

वरदराजः मित्राय गजायाः शवं प्रदर्शयन्– "गजायाः दन्तौ न भवतः इति भवता पूर्वं न उक्तम् एव। किन्तु गजे जीवति मृते सति चापि सहस्रं रूप्यकाणि इति भवतः वचनं सत्यं जातम्। यदा गजा जीवति स्म तदा तस्याः उदरस्य पूरणार्थं सहस्रं रूप्यकाणि प्रतिमासं व्ययीक्रियन्ते स्म मया। इदानीं सा यदा मृता तदा इतः नीत्वा गर्ते तस्याः निखननं कारयितुं पुनः सहस्रं रूप्यकाणि व्ययीकरणीयानि" इति खेदेन उक्तवान्।



# चन्दमामायाः अनुबन्धः–६०

अस्मद्देशीया पशुपक्षिसम्पत्–

## चमरीमृगः

पर्वतप्रदेशेषु निवसन्तः चमरीमृगाः 'चमरीधेनुः' (याक्) इत्यपि निर्दिश्यन्ते जनैः। चमरीमृगाः अस्माकं देशे आ काश्मीरात् आसिक्किंप्रदेशं हिमालयस्य उपत्यकासु विशेषतः दृश्यन्ते।

आकारेण एते धेनोः अपेक्षया उन्नताः दृढतराः च। एतेषां सामान्यम् औन्नत्यं १७०-१८५ सें.मी.। पर्वतं लीलया आरोहन्ति एते। एते समुद्रतटात् ४,३००-६,००० मीटर्-उन्नते प्रदेशे वसन्ति प्रायः। कृष्णमये एतेषां शरीरे सान्द्राणि दीर्घाणि लोमानि भवन्ति। अतः एव एते घोरं शैत्यम् अपि सोढुं शक्नुवन्ति।

प्राचीने काले एते अरण्यमात्रे दृश्यन्ते स्म। किन्तु एषु दिनेषु क्षीरार्थम् एते गृहेषु अपि पाल्यन्ते। वाहनरूपेण, भारवहनार्थं चापि एतेषाम् उपयोगः क्रियमाणः दृश्यते।

समूहरूपेण वासः एतेषां स्वभावः। चमरी-धेन्वोः सङ्करात् उत्पन्ना नूतना जातिः अपि तत्र तत्र दृश्यते। एषा जातिः 'मेथ्यन्' नाम्ना निर्दिश्यते।

कालिदासः कुमारसम्भवे हिमालयं वर्णयन् एवं वदति–

लाङ्गूलविक्षेपविसर्पिशोभैः इतस्ततश्चन्द्रमरीचिगौरैः।
यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति बालव्यजनैश्चमर्यः॥ इति।



## आधुनिकाः भारतीयचित्रकाराः

# अवनीन्द्रनाथ ठागोर्

"रमणीयतया निर्गस्य चित्रं चित्रयितुं भवन्तः उद्यानं नदीतीरं वा गत्वा उपविश्य क्षेत्रं, पुष्पाणि, वृक्षगुल्मादीनि च यथावत् लिखन्ति इत्येषः अंशः मया लक्षितः। निसर्गसौन्दर्यं भवन्तः एतेन प्रकारेण चित्रेषु प्रदर्शयितुं प्रयतन्ते यत् तत् दृष्ट्वा आश्चर्यम् अनुभवामि अहम्। 'सौन्दर्यं न बाह्यमात्रम्। तत् हृदयान्तराले निहितं भवति' इति स्मर्तव्यं भवद्भिः। महाकवेः कालिदासस्य कविताकौशलं प्रथमं परिशीलयन्तु। ततः आकाशं पश्यन्तु। तदा ज्ञायते भवद्भिः— नीले गगने विहरन्त्याः मेघमालायाः सन्देशः। आदिकवेः वाल्मीकेः समुद्रवर्णनं पठन्तु तावत्। ततः समुद्रं पश्यन्तु। अनन्तरं चित्रणे प्रवृत्ताः भवन्तु। यदि सौन्दर्यप्रज्ञा अस्मासु सम्यक् अस्ति तर्हि अस्माभिः उद्यानेषु नदीतीरेषु चैव उपविश्य चित्रं लेखनीयम् इति नास्ति। यदि सौन्दर्यप्रज्ञा नास्ति तर्हि रमणीये परिसरे उपविश्य अपि रमणीयं चित्रं लेखितुं न शक्नुमः वयम्।"



प्रमुखेण चित्रकारेण अवनीन्द्रनाथ ठागोरवर्येण स्वशिष्यान् उद्दिश्य कृतः उपदेशः एषः। एतस्मात् एव ज्ञायते यत् चित्रकलाविषये तस्य अभिप्रायः कीदृशः आसीत् इति।

अस्माकं संस्कृतेः सत्त्वं, कलापरम्परायाः मूलप्रेरणा च यदा सम्यक् अवगम्यते तदा एव चित्रेषु सजीवत्वं स्फुटं भासते इति अवनीन्द्रनाथवर्यः भावयति स्म।

विश्वकवेः रवीन्द्रनाथठागोरवर्यस्य सहोदरस्य पुत्रः अवनीन्द्रनाथः। एषः

१८७१ तमे वर्षे जन्म प्राप्तवान्। तत्काले ठाकुरवंशीयाः जगतः विविधक्षेत्रेषु प्रसिद्धानां प्रमुखाणाम् अवधानम् आकृष्टवन्तः आसन्।



अवनीन्द्रनाथः प्राथमिकस्तरे आंग्लेयशैल्याः इटलीशैल्याः च प्रभावं प्राप्तवान्। पाश्चात्यचित्रकलाशैलीम् अनुकरोति स्म सः। तत्काले ए.बि. हावेलवर्यस्य परिचयः एतेन प्राप्तः, यश्च भारतीयकलासम्पदं न केवलं विदेशीयाः, अपि तु भारतीयाः अपि आदरेण यथा पश्येयुः तथा कृतवान् आसीत्। ततः आरभ्य अवनीन्द्रनाथवर्यः भारतीयचित्रकलायाः वैशिष्ट्यं जानन् तां शैलीम् अभिवर्धयितुं स्वप्रतिभायाः विनियोगं कृतवान्। अवनीन्द्रनाथवर्यः पाश्चात्यशैलीं न अनुकरोति स्म इति न, तथापि तदीयेषु चित्रेषु भारतीयसंस्कृतेः विशेषांशाः प्राधान्येन भासन्ते स्म।

अवनीन्द्रनाथवर्यः 'इण्डियन् सोसैटि आफ् ओरियण्टल् आर्ट्' नामिकां संस्थां स्थापितवान्। ततः बहवः चित्रकाराः प्रेरणां प्राप्तवन्तः सन्ति। तेषु नन्दलालबोस् अन्यतमः।

१९५१ तमे वर्षे अवनीन्द्रनाथवर्यः दिवं गतः।

# भवन्तः जानन्ति वा?

१. अस्माकं देशे राज्यानां पुनर्विभागव्यवस्था कदा जाता?
२. गतेषु दशसु वर्षेषु कः देशः अण्वस्त्ररहितः अस्ति?
३. पञ्चतन्त्रकथाः कस्य राज्ञः शासनकाले सङ्कलिताः?
४. कः मृगः प्रकृतिप्रपञ्चनिधेः चिह्नत्वेन प्रसिद्धः?
५. अस्माकं देशे रेल्वेकोष्ठ-निर्माण-यन्त्रागारं कुत्र अस्ति?
६. किं वाहनं न्यूनतमं परिसरमालिन्यं जनयति?
७. कस्मिन् राज्ये खनिजाङ्गारखन्यः आधिक्येन सन्ति?
८. 'ब्लू चिप्' इत्येतस्य कः अर्थः?
९. देवेन्द्रस्य राजधानी का?
१०. इरानदेशे अयतुल्ला खामोनी कस्मिन् वर्षे अधिकारपदम् आरूढवान्?
११. अस्माकं देशे शताधिकवर्षेभ्यः प्रचलन्त्यः पत्रिकाः कति?
१२. 'क्विट् इण्डिया' इति घोषणा कस्मिन् वर्षे कृता?
१३. सः प्रथमः यवनराजः कः, यश्च नाणकेषु देवनागरीलिप्याः उपयोगं कृतवान्?
१४. युरोपखण्डे अतिदीर्घा नदी का?
१५. ग्रहेषु महान् कः?

## उत्तराणि

१. १९५६ तमे वर्षे।
२. न्यूजिल्याण्ड्देशः।
३. चन्द्रगुप्तविक्रमादित्यस्य काले।
४. पाण्डामृगः।
५. मद्रासनगरे पेरम्बूरुप्रदेशे।
६. द्विचक्रिका।
७. बिहारराज्ये।
८. 'सक्रमम् अभिवृद्धिं प्राप्नुवत्याः महासंस्थायाः शेर्' इति।
९. अमरावती।
१०. १९७१ तमे वर्षे।
११. ३६।
१२. १९४२ तमे वर्षे अगस्टमासे अष्टमे दिनाङ्के।
१३. घेरषा।
१४. वोलगानदी।
१५. गुरुः। (भूमेः अपेक्षया एकादशगुणितं विशालः अस्ति सः।)



# कार्यसाधकः

लक्ष्मीपतिः कश्चन भूस्वामी। तस्य कार्यालये नारायणः नाम कश्चन सहायकः आसीत्। सः कृषिकार्याणां परिशीलनं, जनैः सह यथायोग्यं वार्तालापम्, आयव्ययगणनालेखनम्, अतिथीनां यथोचितः सत्कारः– इत्यादीनि कार्याणि सम्यक् निर्वहति स्म। किन्तु दौर्भाग्यकारणतः सः अकालमरणं प्राप्तवान्। इदानीं तस्य स्थाने कः अन्यः नियोजनीयः इति भूस्वामी चिन्ताक्रान्तः अभवत्। कदाचित् सः स्वस्य चिन्तां प्रधानसहायकं विस्तरेण निवेदितवान्।

क्षणकालं विचिन्त्य सः प्रधानसहायकः उक्तवान्– "श्रीमन्! नारायणस्य पुत्रः शशाङ्कः एव एतदर्थं योग्यः इति मम आशयः" इति।

काकतालीयन्यायेन अनन्तरदिने शशाङ्कः अपि भूस्वामिनं दृष्ट्वा प्रार्थितवान् यत् पिता यम् उद्योगं करोति स्म तस्मिन् स्थाने मां नियोजयतु इति। 'बुद्धिमत्तां, कार्यदक्षतां, प्रामाणिकतां, परिश्रमशीलतां च परीक्ष्य एव एषः कार्ये नियोजनीयः' इति आलोच्य भूस्वामी शशाङ्कम् उक्तवान् यत् दिनद्वयस्य अनन्तरम् आगत्य मां पश्यतु इति।

भूस्वामिनः आदेशस्य अनुगुणं दिनद्वयस्य अनन्तरं शशाङ्कः भूस्वामिनः गृहम् आगतवान्।

तदा भूस्वामी तम् उक्तवान्– "उद्योगदानविषये अग्रे वदिष्यामि। ततः पूर्वं भवता किञ्चन कार्यं करणीयम्। अद्य सायङ्काले मम पुत्री पतिगृहं गमिष्यति। तस्याः निमित्तम् एकम् आभरणं कारितम्। तत् अद्य प्रातः नगरस्थात् सुवर्णकारात् अत्र



आनीतम्। तत् आभरणं दृष्ट्वा मम पुत्री उक्तवती यत् आभरणे कानिचन परिवर्तनानि कारितानि चेत् आभरणस्य शोभा वर्धते इति। अतः भवान् इदानीम् एव नगरं गत्वा परिवर्तनानि कारयित्वा सायङ्कालात् पूर्वं प्रत्यागच्छतु'' इति।

शशाङ्कः भूस्वामिनः पुत्रीं दृष्ट्वा आभरणे कीदृशानि परिवर्तनानि करणीयानि इति ज्ञात्वा आभरणं स्वीकृत्य नगरं गतवान्। नगरे भूस्वामिना सूचितं स्वर्णकारं दृष्ट्वा भूस्वामिनः आशयं निवेदितवान् च।

स्वर्णकारः शशाङ्केन उक्तं समग्रं श्रुत्वा– ''भोः, मम आपणः सुप्रसिद्धः इति भवान् जानीयात् एव। प्रतिदिनम् अत्र बहवः उच्चोद्योगिनः, धनिकाः, भूस्वामिनः, वणिजः च आगत्य आभरणानि कारयन्ति, क्रीणन्ति च। अतः भवतः भूस्वामी कः इति मया न स्मर्यते। अस्माकम् आपणात् क्रीते आभरणे क्रेतुः अपेक्षायाः अनुगुणं परिवर्तनं कृत्वा दातव्यम् इति तु अस्माकं कर्तव्यम्। किन्तु एतत् आभरणम् इतः एव क्रीतम् इत्यत्र प्रमाणम् अपेक्ष्यते। धनं यदा दत्तं तदा अस्माभिः प्राप्तिपत्रं दत्तं भवति। तत् प्रदर्शयतु तावत्'' इति उक्तवान्।

भूस्वामी शशाङ्काय तादृशं पत्रं किमपि न दत्तवान् आसीत्। ग्रामं गत्वा तादृशस्य आनयनार्थं महतः परिश्रमस्य व्ययः, महान् समयः च अपेक्ष्यते। सायङ्कालात् पूर्वम् एतत् कार्यं न समाप्यते।

अतः शशाङ्कः स्वसमस्यां विस्तरेण निवेद्य शीघ्रं परिवर्तनं कारयतु कृपया इति विनयेन प्रार्थितवान्।

तदा स्वर्णकारः उक्तवान्– ''इतः यत् आभरणं क्रीतं तस्मिन् परिवर्तनं शीघ्रं कृत्वा दीयते। अन्यतः क्रीते आभरणे परिवर्तनं न क्रियते इति न। तदर्थं सप्ताहात्मकः कालः अपेक्ष्यते। अस्माकं ग्राहकाः ये सन्ति तेषां कार्यस्य आद्यता अत्र'' इति।

स्वर्णकारस्य वचनस्य श्रवणस्य अनन्तरं शशाङ्कः क्षणकालं चिन्तयन् स्थितवान्। ततः सः स्वर्णकारं पृष्टवान्– ''श्रीमन्! अहम् एतत् आभरणं विक्रेतुम् इच्छामि। भवान्

क्रेष्यति वा?" इति।

"अथ किम्? स्वर्णकाराः खलु वयम्? आभरणानां क्रयणं विक्रयणं निर्माणं च अस्माकं परम्परागता वृत्तिः। आभरणम् अवश्यं क्रेष्यामि" इति उक्त्वा शशाङ्कात् आभरणं स्वीकृत्य धनं दत्त्वा आभरणं पेटिकायां स्थापितवान्।

धनं स्वीकृत्य किञ्चिद्दूरं गतः शशाङ्कः खेदम् अभिनयन् स्वर्णकारस्य समीपम् आगत्य– "श्रीमन्! किमपि चिन्तयता मया आभरणं विक्रीतम्। वस्तुतः तस्य विक्रयणे मम इच्छा न आसीत्। अतः तदेव आभरणं पुनः क्रेतुम् इच्छामि। किन्तु आभरणे किञ्चित् परिवर्तनम् इच्छामि" इति उक्तवान्।

"ग्राहकाः यथा इच्छन्ति तथा आभरणं सज्जीकृत्य दद्मः वयम्। यतः एषः अस्माकं वृत्तिधर्मः" इति उक्त्वा 'शशाङ्कस्य सूचनायाः अनुगुणं परिवर्तनानि करोतु' इति कर्मकरम् आदिष्टवान्।

अल्पे एव काले शशाङ्कस्य अपेक्षयाः अनुगुणम् आभरणं सिद्धम्। तदा स्वर्णकारः उक्तवान्– "भवतः मया येन मूल्येन क्रीतं तेन मूल्येन विक्रयणं कर्तुं न शक्यते। भवता एतदर्थं शतं रूप्यकाणि अधिकतया दातव्यानि भवन्ति" इति।

आभरणे परिवर्तनं कारयितुं भूस्वामिना शशाङ्काय शतं रूप्यकाणि दत्तानि आसन्। तानि योजयित्वा आभरणस्य समग्रं मूल्यं दत्त्वा तत् आभरणं क्रीतवान् शशाङ्कः। ततः सायङ्कालात् पूर्वं भूस्वामिनः गृहं प्राप्तवान् च।

वस्तुतः न सः स्वर्णकारः भूस्वामी च आत्मीयौ स्नेहिनौ। भूस्वामिनः सूचनायाः अनुगुणम् एव स्वर्णकारः तथा व्यवहृतवान् आसीत्।

शशाङ्कस्य मुखात् प्रवृत्तं समग्रं श्रुत्वा सन्तुष्टः भूस्वामी तस्य समयस्फूर्तिं कार्यसाधकतां च अभिजानन् तम् उद्योगे नियोजितवान्।





# उत्तमः शिल्पी

शर्वानन्दः नाम शिल्पी पूर्वं विन्ध्यप्रदेशे निवसति स्म। सः शिल्पकलायाम् अप्रतिमः आसीत्। शरभः वरेण्यः चेति तदीयौ उभौ शिष्यौ आस्ताम्। तौ दश वर्षाणि यावत् अध्ययनं कृत्वा शिल्पशास्त्रे नैपुण्यं प्राप्तवन्तौ। विद्याभ्याससमाप्तेः अनन्तर तौ प्रेषयन् शर्वानन्दः– "वत्सौ! भवन्तौ शिष्यत्वेन प्राप्य अहं नितरां सन्तुष्टः अस्मि। भवन्तौ अपि प्रतिफलापेक्षाम् अकृत्वा शिष्यान् सम्यक् पाठयताम्। अग्रे कदाचित् स्वयम् आगत्य अहं भवन्तौ द्रक्ष्यामि" इति।

शरभ-वरेण्यौ ततः निर्गतवन्तौ। शरभः स्वग्रामं प्राप्तवान्। ग्रामे पित्रार्जिता भूमिः आसीत् तस्य। अतः जीवननिर्वहणे कोऽपि क्लेशः न आसीत्। शिल्पनिर्माणसमये साहाय्यं भवतु इति उद्देशेन सः नृत्यनिपुणां मीनाक्षीनामिकां तरुणीं परिणीतवान्। तेन निर्मीयमाणानि सर्वाणि शिल्पानि जनादरणीयानि भवन्ति स्म।

शरभतः शिल्पशास्त्रम् अध्येतुं बहवः तत्समीपम् आगच्छन्ति स्म। तादृशान् सर्वान् अपि पाठयति स्म शरभः। सः सर्वेभ्यः अपि निश्शुल्कं शिल्पानि निर्माय यच्छति स्म। एवं कारणद्वयतः तस्य कीर्तिः सर्वत्र प्रसृता। अध्येतॄणां पाठनार्थं, शिल्पानां निर्माणार्थं च दिनस्य चतुर्विंशतिः घण्टाः अपि अपर्याप्ताः भवन्ति स्म। तथापि खेदं न अनुभवति स्म शरभः।

एवम् एव कानिचन वर्षाणि अतीतानि। कदाचित् राजा सडिण्डिमघोषं वार्ता प्रसारितवान् यत् देवनर्तक्याः मेनकायाः सुन्दरीं मूर्तिं यः रचयति तस्मै दशसहस्रं सुवर्णनाणकानि दीयन्ते इति। राज्ञा एतदपि प्रसारितं यत् नूतनतया निर्मीयमाणस्य नाट्यमन्दिरस्य निर्माणार्थं बहवः शिल्पिनः अपेक्ष्यन्ते इति।

"श्रीमाता"

शरभः नाट्यमन्दिरस्य निर्माणार्थं स्वशिष्यान् प्रेषयित्वा स्वयं मेनकायाः शिल्पस्य निर्माणे उद्युक्तः अभवत्। किन्तु दशसु दिनेषु एव तदीयाः शिष्याः सर्वे प्रत्यागताः। यतः राज्ञा शिल्पिनां निमित्तम् आयोजितायां परीक्षायां ते सर्वे अनुत्तीर्णाः आसन्।

"चिन्ता खेदः वा मास्तु भवताम्। भवत्सु स्थितान् लोपान् दूरीकृत्य भवतः सर्वान् मत्सदृशान् करिष्यामि" इत्यादिभिः वचनैः तेषां खेदम् अपनीय शरभः स्वयं च शिल्पनिर्माणकार्यम् अनुवर्तितवान्। मासत्रयाभ्यन्तरे शिल्पं सिद्धम्।



अत्रान्तरे वार्ता श्रुता यत् नाट्यमन्दिरं सिद्धप्रायम् इति। शरभः स्वशिल्पं शकटे आरोप्य राजधानीं प्रति निर्गतवान्।

दिनद्वयस्य प्रयाणस्य अनन्तरं शरभः वरेण्यस्य ग्रामं प्राप्तवान्। बहून् पृष्ट्वा अपि शरभः वरेण्यगृहस्य स्थलं न ज्ञातवान्। अन्ते कश्चन तरुणः उक्तवान्– "अस्माकं ग्रामस्य सीमायां कश्चित् निवसति। भवान् प्रायः तं द्रष्टुम् इच्छति इति मन्ये। किं भवान् ततः शिल्पं क्रेतुम् इच्छति? तर्हि भवता निराशा प्राप्तव्या भवेत्। यतः सः अधिकं मूल्यं वदति" इति।

शरभः उत्तरं किमपि अनुक्त्वा अग्रे गतवान्। वरेण्यस्य गृहं सामान्यम् आसीत्। वरेण्यः अधिकेन मूल्येन शिल्पानां विक्रयणं कुर्वन् प्रभूतं धनं सम्पादयति स्म। अतः तदीयाः शिष्याः अपि न बहवः। ये शिष्याः आसन् ते अपि इदानीं राजधान्यां निर्मीयमाणस्य नाट्यमन्दिरस्य निर्माणे मग्नाः आसन्।

एतत्सर्वं ज्ञात्वा शरभः वरेण्यम् आश्चर्येण पृष्टवान्– "विद्याभ्यासं समाप्य गुरुकुलात् प्रस्थानसमये आचार्येण उक्तम् आसीत् यत् प्रतिफलापेक्षां विना कार्यं करणीयम् इति। एतत् भवान् विस्मृतवान् वा?" इति।

"न खलु? गुरोः वचनं शिरोधार्यं मम। यदि प्रतिफलस्य अपेक्षा मम स्यात् तर्हि महता वैभवेन जीवनम् अकरिष्यम्। यद्यपि लक्षशः



रूप्यकाणि मया प्राप्यन्ते, तथापि सामान्य जीवनं मम। न भोगसाधनानि, न वा सेवकगणः। अत्रत्याः सर्वे स्वकार्याणि स्वयं कुर्वन्ति'' इति उक्तवान् वरेण्यः।

'महाकृपणः एषः सम्पादितं धनम् अपि व्ययीकर्तुं न इच्छति' इति वरेण्यविषये चिन्तितवान् शरभः।

शरभं महत्या प्रीत्या आदरेण च सत्कृतवान् वरेण्यः। सप्ताहं यावत् स्वर्गसुखम् अनुभूतवान् शरभः। ततः तौ उभौ अपि राजधानीं प्रति प्रस्थितवन्तौ। एकेन निर्मितं शिल्पम् अपरः न दृष्टवान् आसीत्। उभयोः अपि शिल्पं तृणकार्पासादिभिः सम्यक् आच्छादितम् आसीत्।

राजधानीं गतवन्तौ तौ स्वशिल्पं राज्ञे समर्पितवन्तौ। ''भवन्तौ श्वः आगच्छताम्'' इति उक्तवान् राजा।

राज्ञा व्यवस्थापिते वसतिगृहे शरभः वरेण्यः चापि वसन्तौ रात्रिं यापयित्वा अनन्तरदिने राजानं दृष्टवन्तौ। एतौ दृष्ट्वा राजा पृष्टवान्– ''भवतोः शिल्पम् अपूर्वम् अस्ति। मानवमात्रेण निर्मातुम् असाध्यं शिल्पं निर्मितं भवद्भ्याम्। किन्तु आश्चर्यं नाम शिल्पद्वयम् अपि समानाकारकम् अस्ति। एतदुभयम् अपि नाट्यमन्दिरे पार्श्वद्वये प्रतिष्ठापयिष्यामि। किन्तु किं शिल्पं केन निर्मितम् इति मया न ज्ञातम्। भवन्तौ शिल्पं दृष्ट्वा स्वकीयं शिल्पम् अभिज्ञाय वक्तुं शक्नुतः वा?'' इति।

तौ शिल्पिनौ शिल्पसमीपं गतवन्तौ। शिल्पद्वये सादृश्यं तावत् आसीत् यत् तौ शिल्पिनौ एव स्वशिल्पम् अभिज्ञातुम् अशक्नुवन्तौ परमाश्चर्यं प्राप्तवन्तौ।

''भवन्तौ उभौ अपि अपूर्वौ शिल्पिनौ। अन्येन निर्मीयमाणस्य शिल्पस्य स्वरूपम् अजानन्तौ अपि भवन्तौ समानं शिल्पं रचितवन्तौ इति न अत्याश्चर्यकरम्। श्रेष्ठौ शिल्पिनौ भवन्तौ समानतया सत्करिष्यामि'' इति उक्तवान् राजा।

तावता तत्र आचार्यः शर्वानन्दः आगतवान्। शिष्ययोः प्रतिभां द्रष्टुं सः तत्र

आगतवान् आसीत्।

राज्ञः मुखात् प्रवृत्तं सर्वं श्रुत्वा शर्वानन्दः उक्तवान्– "एतयोः वरेण्यः एव श्रेष्ठः। शरभः च द्वितीयं स्थानम् अर्हति। एतौ मम शिष्यौ इत्यतः मम अभिप्रायम् अङ्गीकुरुतः एव" इति।

"भवतः शिष्यौ भवदीयं वचनम् अङ्गीकुर्यातां नाम। किन्तु कारणम् अज्ञात्वा अहम् एतयोः कञ्चित् एव श्रेष्ठं मत्वा कथं सत्कर्तुं शक्नुयाम्?" इति पृष्टवान् राजा।

तदा शर्वानन्दः उक्तवान्– "राजन्! वरेण्यः इव शरभः अपि प्रतिभावान् इत्यत्र नास्ति सन्देहः। किन्तु युक्तायुक्ततानिर्णये तस्य सामर्थ्यं न्यूनम्। अतः एव सः मत्तः प्राप्तां विद्याम् अपात्रेषु अपि वितीर्णवान्। कलागौरवं विस्मृत्य जनप्रीत्यर्थम् अल्पगुणानां शिल्पानां निर्माणं कृतवान्। श्रद्धारहितान्, कलागौरवम् अजानतः, परिश्रमम् अनिच्छतः शिष्यान् सः पाठितवान्। अतः एव तस्य शिष्येषु एकः अपि मन्दिरनिर्माणकार्यार्थम् आयोजितायां परीक्षायाम् उत्तीर्णतां न प्राप्तवान्। शरभः धनरूपं प्रतिफलम् न इष्टवान्, किन्तु प्रशंसारूपं प्रतिफलम् इष्टवान्। किन्तु वरेण्यः कलायाः मूल्यं जानन् उत्तमानां शिल्पानां निर्माणं कुर्वन् योग्येन मूल्येन तेषां विक्रयणं कृतवान्। कलाभिज्ञाः एव तानि क्रीतवन्तः। अपरीक्ष्य एव कमपि शिष्यत्वेन न स्वीकृतवान् सः। अतः तस्य शिष्याः न्यूनाः। किन्तु समर्थाः ते एव इदानीं नाट्यमन्दिरनिर्माणे प्रमुखं पात्रं निर्वहन्ति। धनं सम्पाद्य अपि सः तत् भोगार्थं न उपयुक्तवान् एव। अतः शरभस्य अपेक्षया वरेण्यः एव श्रेष्ठः" इति।

शर्वानन्दस्य वचनस्य अनुगुणं वरेण्यं श्रेष्ठत्वेन सम्मानयन् राजा शरभाय अपि योग्यानि उपायनानि दत्तवान्। एतस्मात् प्रसङ्गात् खेदं किञ्चिदपि अननुभवन् शरभः स्वदोषान् अवगच्छन् युक्तं मार्गम् आश्रित्य उत्तमः शिल्पी इति कीर्तिं प्राप्तवान्।



# र स वा र्ता:

## विशेषविमानेन यात्रा

त्वरया करणीयस्य कार्यस्य निमित्तं भवन्तः प्रस्थिताः सन्ति। तत्समये लोकयानं न प्राप्तं चेत् भवन्तः किं कुर्वन्ति? त्रिचक्रिकया भाटककारयानेन वा गच्छन्ति खलु? येन रैलुयानेन गन्तव्यम् आसीत् तत् न प्राप्तं चेत् किं वा कर्तुं शक्येत? विमानयानेन गमनं सम्भाव्यते। किन्तु कदाचित् प्राप्तव्यं विमानयानम् एव न प्राप्तं चेत्? सौदि-अरेबियादेशस्य युवराजस्य एतादृशी एव परिस्थितिः आगता। तदा सः विशेषविमानयानेन प्रयाणं कृतवान्!! प्रवृत्तं तु एवम्– प्यारिस्नुतः न्यूयार्कं गन्तव्यम् आसीत् तेन। यानायानसम्मर्दकारणतः विलम्बः जातः इत्यतः, तेन येन विमानेन गन्तव्यम् आसीत् तत् विमानं निर्गतम् आसीत्। अग्रिमं विमानयानं तु घण्टाद्वयस्य अनन्तरं प्रतिष्ठते स्म। तावत् प्रतीक्षां कर्तुम् अनिच्छन् सः युवराजः २,३६,००० डालर् धनं दत्त्वा




विशेषविमानयानेन निर्गत्य घण्टात्रयाभ्यन्तरे न्ययार्कनगरं प्राप्तवान्।

केनचित् ब्रिटिषसैनिकेन गृहे स्थितम् उपनेत्रम् आनेतुं ३०,००० कि.मी. यावत् विमानप्रयाणं करणीयम् आपतितम्। अट्लाण्टिकसमुद्रसमीपे 'फाक्ल्याण्ड्' इत्यत्र सः सैनिकः कार्यं करोति स्म। तत्समये क्रीडाव्यग्रस्य तस्य उपनेत्रं पतितं, भग्नं च। कम्प्यूटर्यन्त्रस्य पुरतः उपविश्य तेन प्रतिदिनं कार्यं करणीयम् आसीत्। अतः उपनेत्रं विना तस्य कार्यं न प्रचलति स्म। अनन्योपायः सः सैनिकः एकं विशेषविमानं व्यवस्थाप्य तेन स्वगृहं गत्वा अपरम् उपनेत्रम् आनीतवान्।




## बिन्दु-रेखा-क्रमः अदृश्यतां गतः

समुद्रप्रयाणसमये महानौकाः परस्परसन्देश-विनिमयार्थं बिन्दु-रेखाक्रमस्य उपयोगं कुर्वन्ति स्म। एषः 'मोर्संक्रमः' इति उच्यते। उदाहरणं तावत् त्रयः बिन्दवः, तिस्रः रेखाः, पुनः त्रयः बिन्दवः च सङ्केतरूपेण प्रेषिताः चेत् 'अस्मान् रक्षन्तु' (सेव् अवर् सोल्स् - एस्.ओ.एस्) इति वार्ता श्रोतृभिः ज्ञायते स्म। एषः क्रमः २०शतकस्य आदिभागे व्यवहारे आसीत्। किन्तु एषु दिनेषु दूरवाणी, कम्प्यूटर्यन्त्रम्, उपग्रहः इत्यादिभिः साधनैः त्वरितगत्या सन्देशाः प्रेष्यन्ते। विज्ञानप्रगतेः फलम् एतत्। अतः 'मोर्स् कोड्' उपयोगरहितं जातम्। आर्.ए.पि. (रेस्ट् इन् पीस्) इति सन्देशस्य प्रेषणात् पूर्वम् एव स च क्रमः अदृश्यतां गतः।




अयोध्यायां कदाचित् रामः मन्त्रिभिः सामन्तैः च सह उपविष्टवान् आसीत्। तदा महर्षिः विश्वामित्रः सभां प्रविश्य– "राम! काशिकापुर्याः राजा ययातिः गर्वान्धः सन् मम अपमाननं कृतवान् अस्ति। तस्य राजाधमस्य वधः करणीयः भवता। गुरोः मम आज्ञा एषा" इति उक्त्वा ततः निर्गतवान्।

विश्वामित्रस्य आज्ञां श्रुत्वा रामः आश्चर्यचकितः। यतः ययातिः विधेयः धर्माचारतत्परः च। सः न्याय्येन मार्गेण काशीराज्यं परिपालयन् आसीत्। विश्वामित्रः तु विविधानि शस्त्राणि दत्तवान्, बलम् अतिबलं चेति उभे विद्ये बोधितवान् आसीत् अपि। अतः रामः काशीराजस्य वधं कर्तुं न शक्नोति, विश्वामित्रस्य वचनं तिरस्कर्तुम् अपि नार्हति।

किङ्कर्तव्यताविमूढः रामः राजसभां तत्क्षणे एव परिसमाप्य अन्तरङ्गमन्दिरं गतवान्।

तत्र सुमन्त्रम् आहूय– "मन्त्रिवर्य! गुरोः विश्वामित्रस्य आज्ञा परिपालनीया एव। अतः मया ययातेः वधः करणीयः एव। किन्तु अहम् एतदर्थं प्रजानां रक्तपातं न इच्छामि। तदर्थं तेन राज्ञा सह बाहुयुद्धं करिष्यामि। अतः भवान् तं प्रति वार्तां प्रेषयतु यत् वधार्थम् अहम् आगच्छन् अस्मि इति" इति आज्ञापितवान् च।

वस्तुस्थितिः तु एषा– कदाचित् प्रजाः

४१. रामाञ्जनेययोः युद्धम्।



आगत्य काशीराजं ययातिं निवेदितवन्तः यत् अरण्यात् आगतः गजसमूहः अन्ये वन्यमृगाः च अस्माकं ग्रामान् प्रविश्य क्षेत्रस्थानि सस्यानि गृहाणि च नाशयन्तः अस्मान् पीडयन्ति इति। प्रजावत्सलः ययातिः तत्क्षणे एव प्रजानां कष्टस्य निवारणार्थं ततः प्रस्थितवान्।

तस्मिन् एव समये अरण्यमार्गेण महर्षिः विश्वामित्रः गच्छन् आसीत्। मृगयागमनव्यग्रः ययातिः रथेन वेगेन गच्छन् विश्वामित्रस्य आगमनं न लक्षितवान्।

'एतेन मम घोरम् अपमाननं जातम्' इति भावयन् विश्वामित्रः– 'दर्शनमात्रेण येन अहं भक्त्या विनयेन च नमस्करणीयः आसम् तं माम् उपेक्षया दृष्टवतः, राजाधमस्य, दुरहङ्कारिणः च एतस्य वधम् अहम् अवश्यं कारयिष्यामि' इति प्रतिज्ञां कृत्वा क्रोधेन ज्वलन् रामसकाशं गत्वा ययातिवधम् आज्ञापितवान् आसीत्।

ययातेः शासनकाले काशीराज्ये सर्वे सुखेन आसन्। तेषां सर्वाः इच्छाः राज्ञा पूर्यन्ते स्म। तान् पुत्रवत् पश्यति स्म राजा। एतादृशस्य वधः गुरुणा किमर्थम् आदिष्टः इति विषयः तु बहुधा चिन्तनेन अपि रामेण न ज्ञातः। प्रष्टुं समयः एव यथा न प्राप्येत तथा त्वरया आज्ञां कृत्वा निर्गतवान् आसीत् विश्वामित्रः।

रामदूतेन आनीतां वार्तां श्रुत्वा ययातिः नितरां भीतः। ययातेः पत्नी यशोधरा। तयोः दम्पत्योः चन्द्राङ्गदः इति पुत्रः, चन्द्रमुखी चेति पुत्री च आस्ताम्। समग्रं कुटुम्बं रामे भक्तिमत् आसीत्।

'ययातेः वधार्थं रामः आगच्छन् अस्ति' इति वार्ता सर्वत्र प्रसृता अभवत्। सर्वे शोकसागरे निमग्नाः अभवन्।

किञ्चित्कालानन्तरं ययातिः दुःखं निगृह्य– "निरपराधः शरणार्थी अहं भवन्तं शरणं गतवान् अस्मि, मां रक्षतु कृपया इति रामम् एव प्रार्थयिष्यामि। रामः करुणामयः इति तु सुप्रसिद्धम्। सः कदापि अन्याय्ये कृत्ये प्रवृत्तः न भवति। विना कारणं कमपि न पीडयति अपि। एतादृशः सः कथं वा अन्याय्यं कृत्यं सहेत? अहं निर्दोषी इति यदि सः

जानीयात् तर्हि अविचार्य कृतायाः गुरोः प्रतिज्ञायाः विरोधं कुर्यात् एव। वस्तुस्थितिम् अजानता तेन मम वधः प्रतिज्ञातः। अतः अहं प्रथमं तं दृष्ट्वा वस्तुस्थितिं निवेदयिष्यामि। ततः सर्वं सम्यक् भविष्यति। सः एव माम् एतस्मात् अपायात् रक्षिष्यति'' इति वदन् ततः प्रस्थितवान्।

सपरिवारम् अयोध्यां प्रति अरण्यमार्गेण गच्छतः ययातेः अभिमुखं नारदः आगतवान्। सः ययातिमुखात् प्रवृत्तं समग्रं ज्ञात्वा मन्दहासपूर्वकम् उक्तवान्– ''मन्दमते! विपत्सम्भावनया भवतः बुद्धिः जडा जाता इति मन्ये। वचनपालने बद्धादरः रामः दर्शनमात्रेण एव भवतः वधं करिष्यति। तथापि अलं चिन्तया। इतः अञ्जनादेव्याः आश्रमं गच्छतु। तां शरणं गत्वा अभय प्रार्थयतु। हनूमान् तस्याः पुत्रः खलु? सद्यः सः तत्रैव अस्ति। अतः अयोध्यां प्रति गमनस्य विचारं परित्यज्य अञ्जनादेव्याः आश्रमं गच्छतु'' इति।

नारदस्य वचनम् अङ्गीकुर्वन् ययातिः अयोध्यागमनविचारं परित्यज्य ततः साक्षात् अञ्जनादेव्याः आश्रमं प्रति गतवान्।

यदा सः आश्रमं प्राप्तवान् तदा अञ्जनादेवी ध्यानं समाप्य उत्तिष्ठन्ती आसीत्। तां साष्टाङ्गं नमस्कृत्य– ''आर्ये, शरणम् आगतः अस्मि। प्राणापायात् भीतं माम् अभयदानेन रक्षतु'' इति करौ योजयित्वा सकरुणं प्रार्थितवान् ययातिः।

''भोः, अलं चिन्तया। यावत् मम पुत्रः





जीवति तावत् शरणागतेन केनापि किञ्चिदपि भीतिः प्राप्तव्या नास्ति। अतः भवान् निश्चिन्तः भवतु'' इति उक्त्वा अभयं दत्तवती अञ्जनादेवी।

तावता गन्धमादनपर्वतात् हनूमान् तत्र आगतवान्। ययातिः हनूमन्तम् अञ्जनां च प्रणम्य– ''मम नाम ययातिः इति। काशीराज्यस्य राजा अहम्। रामे भक्तिः श्रद्धा च अस्ति मम। अहम् इदानीम् अपायग्रस्तः अस्मि'' इति सभयं निवेदितवान्।

तदा हनूमान् ययातिं भुजग्रहणपूर्वकम् उत्थाप्य– ''महाराज! मम मात्रा अभयं दत्तं खलु? एवं स्थिते कुतः चिन्ता? मातृवचनपरिपालकः अहं भवतः रक्षणम् अवश्यं करिष्यामि। काऽपि भीतिः मास्तु भवतः'' इति उक्तवान्।

तदा ययातिः– ''आञ्जनेय! रामः निरपराधम् अपि मां हन्तुम् आगच्छन् अस्ति'' इति उक्त्वा प्रवृत्तं समग्रं विस्तरेण निवेदितवान्।

हनूमान् अञ्जनादेवी च श्रद्धया सर्वं श्रुतवन्तौ। सर्वस्य श्रवणस्य अनन्तरम् अञ्जनादेवी उक्तवती– ''अहो, अकार्यं कृतं मया। पूर्वापरविचारम् अविचार्य अभयं दत्तम्'' इति।

तदा हनूमान् उक्तवान्– ''अम्ब! अलं चिन्तया। आर्तरक्षणं श्रेष्ठं धर्मकार्यम्। यावत् अहं जीवामि तावत् शरणागतस्य ययातेः कोऽपि अपायः यथा न स्यात् तथा रक्षणं करिष्यामि'' इति।

ययातये हनूमता अभयं दत्तम् इति वार्ता सर्वत्र प्रसृता। सा वार्ता अयोध्यां प्रति अपि गता। रामेण श्रुता। अन्तःपुरस्थया सीतया अपि एषा वार्ता श्रुता।

सीता यदा चन्द्रशालायां स्थित्वा अधः पश्यन्ती आसीत् तदा यशोधरा पुत्राभ्यां सह आगत्य– ''अम्ब! जानकि! पतिप्राणभिक्षया अहं रक्षणीया'' इति उच्चैः रुदती उक्तवती।

''आर्ये, भवत्याः पतिः हनूमतः आश्रये सकुशलं तिष्ठति इति वार्ता श्रुता। अपूर्वम् आश्रयं प्राप्तवन्तं तं पीडयितुं कोऽपि न

अर्हति। भवती पुत्राभ्यां सह अत्र तिष्ठतु'' इति उक्त्वा सीता यशोधराम् आदरेण स्वागतीकृत्य अन्तःपुरे वासार्थं योग्यां व्यवस्थाम् उपकल्पितवती। यशोधरायाः पुत्रौ दृष्टवत्याः सीतायाः मनसि अपि भावना उत्पन्ना यत् यदि एतादृशौ सुन्दरौ सुगुणौ पुत्रौ मम अपि स्यातां तर्हि वरम् अभविष्यत् इति।



रामः धनुर्बाणादिकं धृत्वा ययातेः वधार्थं निर्गतवान्। तम् अनुसृत्य त्रयः सहोदराः, मन्त्रिणः, परिवारजनाः च गतवन्तः। ऋते रामात् सर्वे निरायुधाः आसन्। यदा रामः अभिमुखम् आगतः तदा हनूमान् महता आदरेण स्वागतवचनानि उक्त्वा अञ्जलिस्थानि पुष्पाणि रामस्य पादयोः अर्पितवान्।

ततः सः रामं साष्टाङ्गं प्रणम्य— ''राचन्द्रप्रभो! ययातिं दयया अनुगृह्णातु। सः निरपराधः। बलहीनस्य सज्जनस्य दण्डनं किं वीरस्य भवतः शोभते? न खलु? कृपया रक्षतु तम्'' इति प्रार्थितवान्।

तदा कुपितः रामः— ''माम् एव कर्तव्यम् उपदिशति वा भवान्? धिक् भवन्तम्'' इति वदन् हनूमन्तं पादेन प्रहृतवान्।

ततः पतितः हनूमान् झटिति उत्थाय— ''शिलामयतां गता यस्य पादस्य धूलेः स्पर्शात् अहल्या पवित्रा जाता, तस्य पादस्य स्पर्शात् इदानीं मम शरीरं धन्यतां गतम्। मयि अपूर्वा शक्तिः उत्पन्ना अस्ति'' इति उक्तवान्।

तदा रामः क्रोधेन— ''अये, अलं मिथ्याप्रशंसया। ययातिं मह्यम् अर्पयतु। गुरोः विश्वामित्रस्य आज्ञां शिरसा वहन् तस्य वधार्थम् आगतवान् अस्मि अहम्'' इति उक्तवान्।

''राम! गुरोः आज्ञायाः युक्तायुक्तताम् अपरिशील्य भवान् उद्युक्तः अस्ति। निरपराधस्य सज्जनस्य भक्तस्य वधः सर्वथा पापकरः। मात्रा ययातये अभयं दत्तम् अस्ति। मातृभक्तः अहं ययातिं रक्षिष्यामि एव। अतः मां हत्वा भवान् ययातेः वधं कर्तुम् अर्हति'' इति गम्भीरस्वरेण उक्त्वा हनूमान् उत्थितवान्। तत्क्षणे तस्य शरीरं



पर्वताकारेण अवर्धत। तीक्ष्णः प्रकाशः तं परितः दृश्यते स्म।

एतत् दृष्ट्वा रामः– "अये, कियत् औद्धत्यं भवतः? भवान् कश्चन वानरः इति अहं चिन्तितवान् आसम्। मया सह युद्धं कर्तुम् उद्युक्तस्य भवतः कियत् धाष्टर्यम्?" इति पुनरपि क्रोधेन उक्तवान्।

"राम! एतत्सर्वं भवतः पादयोः महिमा इति मया उक्तम् एव खलु?" इति उक्तवान् हनूमान्।

रामः धनुः गृहीत्वा बाणान् प्रयुक्तवान्। हनूमान् पुच्छं वर्धयित्वा परितः भ्रामयन् रामेण प्रयुक्तान् सर्वान् बाणान् विफलीकृतवान्। तत्समये विश्वामित्रः तत्र आगतवान्।

यथा यथा रामः अस्त्राणां प्रयोगं करोति तथा तथा हनूमतः शरीरं वर्धते स्म। अतः रामेण धनुः आकाशाभिमुखं कृत्वा बाणाः प्रयोक्तव्याः अभवन्।

एतत् दृष्ट्वा स्वशरीरं ह्रस्वीकृत्य हनूमान् भूमौ उपविशन्– "इदानीं माम् उद्दिश्य बाणानां प्रयोगे भवतः क्लेशः न स्यात् इति भावयामि" इति उक्तवान्।

तदा रामः क्रुद्धः सन्– "अये! दर्पान्ध! इदानीं रामबाणस्य प्रयोगं कुर्वन् अस्मि। एतेन भवतः आयुः, मम कार्यं च समाप्तं भविष्यति" इति वदन् चन्द्राकारकं बाणं हस्तेन गृहीतवान्।

तदा विश्वामित्रः धावन् रामसमीपम् आगत्य– "राम! अलं युद्धेन। हनूमति प्रसन्नः भवतु। एतत्सर्वं दृष्टवतः मम अहङ्कारः अपगतः। ययातेः दोषः कोऽपि नास्ति अत्र" इति उक्तवान्।

तदा रामः अनङ्गीकारपूर्वकं शिरः चालयन्– "गुरुवर्य! अस्त्रं हस्ते अस्ति। एतत्क्षणे एव भवतः आज्ञां निर्वर्तयिष्यामि। कृपया मां मा निवारयतु" इति विश्वामित्रं प्रार्थितवान्।

अनन्तरं सः धनुषि रामबाणं नियोज्य हनूमन्तं लक्ष्यीकृत्य गृहीत्वा– "आञ्जनेय! इदानीं वा अहङ्कारं परित्यज्य ययातिं मह्यम् अर्पयतु, आत्मनः रामसेवकत्वं रक्षतु।

अन्यथा प्राणैः वियोगं प्राप्तुं सिद्धः भवतु" इति उक्तवान्।

तदा हनूमान्– "पूर्वम् इदानीम् अग्रे चापि अहं रामसेवकः एव। शरणागतं यः परित्यजति सः कथं रामसेवकः भवितुम् अर्हति? अतः शरणागतरक्षणार्थम् अहं प्राणान् अर्पयितुं सिद्धः एव। अतः बाणम् अविलम्बेन मुञ्चतु। पूर्णहृदयेन भवतः बाणं स्वागतीकरोमि" इति वदन् वक्षःस्थलं द्विधा विभज्य रामाभिमुखं स्थितवान्। रामः बाणं प्रयुक्तवान्। स च बाणः हनूमतः वक्षःस्थलं प्रविश्य अदृश्यः अभवत्। तदा प्रकाशमाना रामाकृतिः तत्र दृष्टा। एतत् अपूर्वं दृश्यं दृष्ट्वा सर्वे आश्चर्यचकिताः।

रामः धनुः अधः स्थापयित्वा– "आञ्जनेय! अजेयः भवान्। अद्य युद्धे जगदेकवीरः अपि अहं पराजितः अभवम्" इति विषादेन उक्तवान्।

हनूमान् विदीर्णस्य वक्षःस्थलस्य पार्श्वद्वयं यदा परित्यक्तवान् तदा हृदयं यथापूर्वं सम्मिलितम् अभवत्।

"राम! अत्र कस्यापि जयः अपजयः वा नास्ति। भवता प्रयुक्तम् अस्त्रं मद्हृदयस्थः भवान् एव परिगृहीतवान्। तत् अस्त्रं भवति एव लीनं जातम्। अत्र मम वैशिष्ट्यं किमपि नास्ति" इति वदन् हनूमान् विनयेन रामं नमस्कृतवान्।

विश्वामित्रः हनूमतः समीपम् आगत्य– "आञ्जनेय! भवतः शरणागतरक्षणप्रवृत्तिः नितरां श्लाघ्या। महावीरस्य रामस्य अपि विरोधं तृणीकृत्य भवान् प्रतिज्ञापालनार्थं प्रवृत्तः। वीराधिवीरः भवान्। 'वीरः हनूमान्' इति भवतः नाम अन्वर्थम् अस्ति। भवतः कीर्तिः त्रिषु लोकेषु चिरस्थायिनी भविष्यति। चिरञ्जीवी भवतु भवान्" इति हनूमतः श्लाघनं कृतवान्।

हनूमान् रामं तत्परिवारजनान् च नमस्कृत्य तान् सर्वान् ससन्तोषं प्रतिप्रेषितवान्। ततः गन्धमादनपर्वतम् उद्दिश्य तपसः निमित्तं गतवान्।





# गिरिजागर्वभङ्गः

अनन्तेशः नाम कश्चन कृषिकः पूर्वम् आसीत्। तस्य भगिनी गिरिजा। अनुजायां गिरिजायां विशेषप्रीतिः अनन्तेशस्य। किन्तु गिरिजायाः तु अग्रजे न विशेषादरः। अनन्तेशः योग्यं वरम् अन्विष्य भगिन्याः विवाहं निर्वर्तितवान्। स्वकीयां भूमिं यौतकरूपेण भगिन्यै अर्पितवान्। स्वयं च निर्धनकुलजातां सुगुणानामिकां परिणीतवान्। दिनानि गतानि। अनन्तेशस्य अपत्यानि जातानि। गच्छता कालेन अनन्तेशस्य तादृशी गतिः आगता यत् यद्दिने कार्यार्थं न गम्यते तस्मिन् दिने उपवासः एव शरणं जातम्।

पुत्राः बुभुक्षया यदा रोदनं कुर्वन्ति तदा अनन्तेशस्य सुगुणायाः च मनः नितरां खिद्यते स्म। यैः क्रीडद्भिः हसद्भिः सन्तोषेण दिनानि यापनीयानि आसन् तादृशाः प्रतिदिनं क्षीयमाणाः सन्ति इति दृष्ट्वा सुगुणा पतिम् उक्तवती– "अस्माकं जीवनं तु कष्टेन प्रचलति। यदि भवान् भगिन्याः गृहं गच्छेत् तर्हि सा किञ्चित् वा साहाय्यं कुर्यात्" इति।

"किं तस्याः महदानुकूल्यम् अस्ति वा, येन सा अस्माकं साहाय्यं कुर्यात्? भगिनीगृहं प्रीत्या गन्तव्यं, न तु धनप्राप्तीच्छया" इति उक्तवान् अनन्तेशः।

"प्रीत्या एव वा भवान् गत्वा आगच्छतु। द्वित्रेभ्यः वर्षेभ्यः सा अत्र न आगता। जीवननिर्वहणव्यग्रेण भवता अपि तत्र न गतम्। गमनागमनादिकं नास्ति चेत् सम्बन्धः क्षीणः भवति। अतः भवान् गत्वा आगच्छतु" इति उक्तवती सुगुणा।

पत्न्याः वचनं तिरस्कर्तुम् अशक्नुवन् अनन्तेशः अनन्तरदिने प्रातः भगिनीगृहं प्रति प्रस्थितवान्। आदिनं प्रयाणं कृत्वा

सायङ्कालसमये सः भगिनीगृहं प्राप्तवान्। आगच्छन्तम् अग्रजं दूरात् एव दृष्टवती गिरिजा। छिन्नानि वस्त्राणि, तैलराहित्यतः जटारूपं गताः केशाः, उपवासकारणतः कृशं शरीरं, कान्तिहीने नेत्रे च अनन्तेशस्य दुर्गतिं स्फुटम् असूचयन्।

'सुखेन निवसन्त्याः मम शान्तिं नाशयितुं, मत्तः धनादिकं प्राप्तुं च अग्रजः आगच्छन् अस्ति' इति चिन्तितवती सा।

द्वारप्रदेशे सकृत् दृष्टा अनुजा क्षणाभ्यन्तरे अदृश्यतां गता यत् तत् दृष्ट्वा अनन्तेशः चिन्तितवान् यत् भगिनी मम पादयोः क्षालनार्थं जलम् आनेतुम् गतवती इति।

'अग्रजः केनापि उपायेन शीघ्रम् एव गृहात् प्रेषणीयः' इति आलोच्य गिरिजा छिन्नां प्राचीना शाटिकां धृत्वा मृत्पात्रेण जलं गृहीत्वा बहिः आगतवती।

क्षणाभ्यन्तरे भगिन्याः वेषे जातं परिवर्तनं दृष्ट्वा अनन्तेशः आश्चर्यचकितः। 'प्रयाणात् श्रान्तः अहम् अन्यां दृष्ट्वा भ्रान्त्या भगिनीं चिन्तितवान् स्याम्' इति स्वगतम् उक्तवान् सः।

द्वारसमीपे स्थितम् अग्रजं दृष्ट्वा कृत्रिमाश्रूणि स्रावयन्ती गिरिजा– "चिरकालानन्तरम् अहं स्मृता भवता। भगिनी सुखेन जीवतु इति उद्देशेन भवता सर्वं कृतम्। किन्तु किं वदामि– अत्रत्यां दुर्गतिम्? दैनन्दिनभोजनार्थम् अपि महत् कष्टम् अनुभोक्तव्यम् अत्र। अश्रुभिः हस्तं क्षालयन्ती अस्मि अत्र" इति उक्त्वा



पादक्षालनार्थं जलं दत्तवती।

भगिन्याः दुर्गतिं शृण्वतः अनन्तेशस्य महान् खेदः जातः। सरलः सः भगिन्याः कपटतां न ज्ञातवान् एव।

'अग्रजः यदि गृहस्य अन्तः आगच्छेत् तर्हि वस्तुस्थितिं जानीयात्' इति आलोच्य गिरिजा अग्रजस्य उपवेशनार्थम् अङ्गणस्थायां वितर्दिकायां रज्जुमयं मञ्चं प्रसारितवती। आच्छादकम् अपि आनीय दत्तवती। प्रयाणात् श्रान्तः अनन्तेशः तत्रैव निद्रावशं गतः।

यदा क्षेत्रात् पत्युः आगमनस्य समयः आसन्नः तदा गिरिजा पृष्ठद्वारात् निर्गत्य गृहात् अनतिदूरे पत्या मिलितवती। अग्रजस्य आगमनवार्तां निवेदितवती च। चिरकालात् अनन्तरम् आवुत्तस्य आगमनस्य वार्तां श्रुत्वा तस्याः पतिः नितरां सन्तुष्टः।

एतत् ज्ञात्वा पतिम् उक्तवती गिरिजा– "अलं सन्तोषेण। अस्माकं समीपे धनम् अस्ति इति यदि अग्रजः जानीयात् तर्हि पुनः पुनः धनं याचेत। अतः अतिदरिद्राणाम् इव व्यवहारः स्यात् आवयोः" इति।

"चिरात् आगतस्य सज्जनस्य पुरतः कीदृशः एषः व्यवहारः?" इति पृष्टवान् पतिः।

"मम सहोदरः सः। तस्मिन् कथं व्यवहरणीयम् इति अहं जानामि" इति उक्तवती गिरिजा। पत्न्याः वचनं विना विरोधम् अङ्गीकृतवान् गिरिजापतिः।

गिरिजा प्राचीनम् अपरं मञ्चम् आनीय अग्रजस्य मञ्चस्य पार्श्वे स्थापितवती।





अनन्यगतिकः गिरिजापतिः तत्र शयनं कृतवान्। आवृत्ताय मुखं प्रदर्शयितुं लज्जाम् अनुभवन् गिरिजापतिः मुखं परिवर्त्य शयनं कृतवान्।

तच्च उत्सवदिनम् आसीत्। तदर्थं गिरिजा विशेषभक्ष्यादिकं निर्मितवती आसीत्। यदि अनन्तेशः न आगतवान् स्यात् तर्हि गिरिजा पत्या सह सन्तोषेण भोजनम् अकरिष्यत्। गिरिजायाः पतिं बुभुक्षा नितरां बाधते स्म। 'मध्यरात्रे आगत्य उत्थाप्य भोजनं परिवेषयिस्यामि' इति उक्तवती आसीत् गिरिजा। अतः पत्न्याः आह्वानस्य निरीक्षायाम् आसीत् पतिः।

आवृत्तस्य दुर्गतिं स्मरतः गिरिजायाः पत्युः नितरां खेदः भवति स्म। तथापि पत्न्याः वचनं विरोद्धुम्, रहस्यं प्रकटयितुं वा अनिच्छन् सः मौनम् आसीत्। रात्रौ शैत्यम् अधिकं जातम्। अतः गिरिजायाः पतिः पत्न्याः मञ्चस्य अधः स्थापिताम् अङ्गारधानीं अनन्तेशस्य मञ्चस्य अधः स्थापितवान्। एतेन किञ्चिदिव तृप्तिः प्राप्ता तेन।

मध्यरात्रसमये गिरिजायाः पतिः गाढनिद्रायां निलीनः जातः। तावता अनन्तेशस्य जागरणं जातम् आसीत्। तावता गिरिजा मन्दं पदं स्थापयन्ती विना शब्दं मञ्चयोः समीपं गतवती। यस्य मञ्चस्य अधः अङ्गारधानी अस्ति तस्य उपरि मम पतिः शयनं करोति इति चिन्तयित्वा सा अनन्तेशस्य मञ्चस्य समीपं गत्वा– "भोजनार्थम् आगच्छतु" इति मन्दस्वरेण उक्त्वा अन्तः गतवती।

भगिन्याः व्यवहारस्य आन्तर्यं न ज्ञातम् अनन्तेशेन। 'पत्युः भीता सा मां रहसि भोजनार्थम् आह्वयन्ती स्यात्' इति चिन्तयित्वा सः कम्बलेन आच्छाद्य मन्दगत्या अन्तः गतवान्। पाकशालायां दीपः मन्दप्रकाशं प्रसारयति स्म।

"भोजनं करोतु। भक्ष्यादीनि पार्श्वे पात्रेषु सन्ति। यद्यत् आवश्यकं तत्सर्वं यथेष्टं स्वीकरोतु" इति उक्त्वा द्वारसमीपं गत्वा उपविष्टवती गिरिजा। आगतः पतिः एव इति भावितवती आसीत् गिरिजा। अन्धकारे

पतिम् अभिज्ञातुम् इच्छन्ती सा अङ्गारधानीं मञ्चस्य अधः स्थापितवती आसीत्। एतं विषयं पतिम् अपि न उक्तवती आसीत् सा।

'मयि प्रीतिमती अनुजा एतादृशं पाकं सज्जीकृतवती इति मन्ये' इति चिन्तयन् अनन्तेशः आकण्ठं भुक्त्वा हस्तं प्रक्षालितवान्। 'यद्यत् आवश्यकं तत्सर्वं स्वीकरोतु' इति एतत् भगिन्याः वचनं स्मरन् सः कम्बलं प्रसार्य पार्श्वस्थेषु घटेषु स्थितानि सर्वाणि कम्बलस्य उपरि पातितवान्। पात्रेषु तण्डुल-दालादयः अपि आसन्। सर्वं ग्रन्थिरूपेण बद्धवान् अनन्तेशः। 'भगिनीम् आह्वयामि चेत् आवुत्तस्य जागरणं भवेत्' इति आलोच्य सर्वं स्वीकृत्य पृष्ठद्वारेण ततः निर्गत्य स्वगृहं प्रति प्रस्थितवान्।

किञ्चित्कालानन्तरं गिरिजायाः पतिः जागरणं प्राप्य पत्नीम् आहूय– "भोजनं कुत्र?" इति पृष्टवान्।

"भोजनं कृतं खलु? पुनः बुभुक्षा वा?" इति कोपेन पृष्टवती गिरिजा।

"केन भोजनं कृतम्?" इति कोपेन पृष्टवान् पतिः।

"भोजनं कृत्वा असत्यं किमर्थम् उच्यते?" इति प्रतिरोधं कुर्वती उक्तवती गिरिजा। एवं तयोः वादविवादः प्रवृत्तः। ततः वस्तुस्थितिः ज्ञाता। "भवता अङ्गारधानी अन्यत्र स्थापिता इत्यतः एव एवं जातम्" इति दोषारोपणं कृतवती गिरिजा।

"अग्रजाय एव भोजनं दातुम् अनिच्छन्ती भवती मत्कुटुम्बीयानां विषये अपि अनादरं प्रकटयेत्। धिग् भवतीम्। निर्गच्छतु इतः" इति वदन् पतिः गिरिजां गृहात् बहिः प्रेषितवान्।

अनन्तेशेन तण्डुलः यः आनीतः आसीत् तत्र सुवर्णनाणकानि अपि आसन्। 'पत्युः भीता मम भगिनी एतेन क्रमेण सुवर्णनाणकानि मदधीनानि कृतवती।' इति चिन्तयन् अनन्तेशः तेन धनेन वृषभद्वयं शकटं च क्रीत्वा ततः धनं सम्पादयन् सुखेन जीवितवान्।



## वार्ताविषयाः बालाः

### बाल-राजदूताः

जपानदेशस्य व्युकोकानगरे गतस्य जुलैमासस्य २४ तम दिनाङ्कात् अगस्ट्मासस्य ४ दिनाङ्कपर्यन्तं पञ्चमं एशिया-फेसिफिक्-बालक-सम्मेलनं प्रवृत्तम्। तस्मिन् सम्मेलने ४० देशेभ्यः समागताः ३०० बालिकाः बालकाः च भागं गृहीतवन्तः। 'जूनियर् चेम्बर् इण्टर्न्याषनल्'नामिका संस्था एतत् सम्मेलनं व्यवस्थापितवती आसीत्। प्रपञ्चस्य विभिन्नदेशीयाः 'जेसी'संस्थायाः बालाः अत्र भागं गृहीतवन्तः। अस्माकं देशतः अष्ट बालकाः गताः। मद्रासुनगरीयः द्वादशवर्षीयः किशोरः बि. गणेशरत्नः एत र गणस्य नायकः आसीत्। गणेशरत्नः मद्रासुनगरस्थे मोर्गटपेटप्रदेशस्थे डि.ए.वि. विद्यालये अष्टमकक्ष्यायां पठति।

सम्मेलनं समाप्य आगतः गणेशरत्नः अस्माकं 'चन्दमामा'कार्यालयम् आगत्य भावचित्रपुस्तकं प्रदर्श्य जपानुप्रवासवृत्तान्तम् उत्साहेन वर्णितवान्।

गणेशरत्नः तन्मित्राणि च कस्मिंश्चित् जपानीयस्य गृहे वासम् अकुर्वन्। एते पञ्चषाणि जपानीपदानि जानन्ति स्म। यस्मिन् गृहे एतेषां वासः आसीत् तद्गृहीयाः कांश्चन आंग्लशब्दान् जानन्ति स्म। "तथापि क्लेशः न आसीत्। अभिनयैः वयं भावविनिमयं कृतवन्तः" इति वदति गणेशरत्नः। सम्मेलने उपस्थिताः बालाः स्वदेशस्य सांस्कृतिककार्यक्रमान् प्रदर्शितवन्तः। एकस्मिन् दिने ते स्वदेशवेषं धृतवन्तः आसन्। गणेशरत्नस्य वेषः सहजः सरलः च आसीत्। (भावचित्रे सः एव वेषः दृश्यते।) अपरस्मिन् दिने इकेबाना, जुडो, ओरिग्मी इत्यादीनां क्रीडानाम् आधारसूत्राणि बोधितानि। विनोदयात्रायाः अङ्गतया 'ग्रीनूल्याण्ड्', 'अम्यूज़्मेण्ट् पार्क्', 'मेरिन् ल्याण्ड्', 'स्पेस् वर्ल्ड्', 'म्यूजियम्,' 'डाल्फिन् षो' इत्यादीनि दर्शितानि। बुल्लेट् ट्रेनुयानेन प्रवासः कारितः अपि।





आन्तिमदिने यः प्रस्तावः उपस्थापितः सः तु गणेशरत्नस्य मनसि सुस्थिरः अस्ति। प्रस्तावस्वरूपं तु— "बालराजदूताः वयं भाविजनतायाः निमित्तम् एतां भूमिं रक्षिष्यामः। स्वमातृभूमेः सौन्दर्यस्य संस्कृतेः च परस्परविनिमयार्थं वयम् अत्र सम्मिलिताः। देशसीमाम् अतिक्रम्य प्रपञ्चहितविषये वयं मित्रैः सह समालोचनं करिष्यामः। जीवनतीरं शान्ति-स्नेहतरङ्गाः स्पृशन्तः सन्ति इत्येतम् अनुभवं वयं प्राप्नुवन्तः स्मः। प्रपञ्चे शाश्वतशान्तेः स्थापनार्थं वयं स्नेहसम्बन्धं दृढीकुर्वन्तः स्मः" इति। "भूमिनामिकाम् अन्तरिक्षनौकां चालयितुं समर्थाः नाविकाः एते बालकाः। एतेषु एव केचन भाविजीवने नायकत्वं प्राप्य प्रपञ्चशान्तिम् उपस्थापयेयुः" इति तत् सम्मेलनं स्वाभिप्रायं प्राकटयत्। विरलम् एतादृशम् अवकाशं प्राप्य सम्मेलने भागं गृहीतवन्तं गणेशरत्नं वयम् अभिनन्दामः। भाविजीवने सः प्रगतिपरम्परां प्राप्नोतु इति आशास्महे च।

## चतुर्वर्षीया कार्यानचालिका





तादृशः बालकः प्रायः कोपि न स्यात् यश्च चालकस्थाने उपविश्य चालनचक्रस्य सञ्चालने इच्छावान् न स्यात्। एतादृशेषु बालेषु हैदराबाद्-नगरीया जूही अगर्वाल् अपि अन्यतमा। इदानीं सा चालकस्थाने एकाकितया उपविश्य यन्त्रं प्रवर्त्य चालनचक्रं सञ्चालयन्ती यानं सुखेन चालयति। आश्चर्यं नाम तस्याः वयः चत्वारि वर्षाणि। जूही क्रीडनकप्रिया। तस्याः एतां रुचिं दृष्ट्वा मातापितरौ निश्चितवन्तौ यत् यानचालनविषये एतस्यै प्रशिक्षणं दातव्यम् इति। प्रशिक्षणकेन्द्रे एषा यानचालनव्यवस्थां सम्यक् ज्ञातवती। विशेषाभ्यासं कृतवती च। ततः सा सञ्चारनियमसङ्केतान् अभ्यस्तवती। इदानीं सा एकाकितया कार्यानं चालयितुं समर्था अस्ति। जूह्याः प्रबला इच्छा यत् प्रौढत्वं प्राप्य कार्यानेन माता सुदूरं नेतव्या इति।

वनिता-प्रमोदकुमारयोः पुत्री एषा जूही जन्मतः तृतीये वर्षे एव तरणनैपुण्यं सम्पादितवती। इदानीं सा सार्धशताङ्गुलोन्नतात् स्थलात् जले कूर्दनं कर्तुं समर्था अस्ति अपि।

बालानां कृते काचित् शुभवार्ता यत् मैसूरुविश्वविद्यालयीयः कश्चन यन्त्रशास्त्रतन्त्रज्ञः बालानां निमित्तं विशिष्टं कार्यानं निर्मितवान् अस्ति। 'टायूमोटो' नामकम् एतत् यानं ३५ सि.सि. इन्धनतैलयन्त्रेण कार्यं करोति। ८५ किलो. भारं वोढुं शक्नोति अपि। एतस्य मूल्यं १५,००० रूप्यकाणि।



# वरपरीक्षा

सा धनपुरनामके ग्रामे चन्द्रचूडः नाम कश्चन धनिकः कृषिकः आसीत्। तस्य एकमात्रपुत्री सुमतिः। यदा पुत्री प्राप्तवयस्का जाता तदा चन्द्रचूडः निश्चितवान् यत् योग्याय वराय मम पुत्री दातव्या इति। तादृशं योग्यं कञ्चित् दृष्टवान् आसीत् सः। तस्य नाम नरेन्द्रः इति। तस्य मातापितरौ न धनिकौ। परिश्रमेण कृषिं कुर्वन् मातापितरौ पोषयन् आसीत् नरेन्द्रः।

पुत्र्याः विवाहस्य प्रस्तावः यदा आगतः तदा चन्द्रचूडस्य पत्नी पार्वती उक्तवती– "नरेन्द्रः न धनिककुले जातः। एतादृशाय पुत्रीं दातुं कथं शक्येत? मम सख्याः पुत्रः वीरेन्द्रः अस्ति खलु? सः धनिककुलोत्पन्नः सुन्दरः च। तस्मै एव पुत्री दातव्या इति मम इच्छा" इति।

पत्न्याः वचनं श्रुत्वा चन्द्रचूडः उक्तवान्– "नरेन्द्रः योग्यः समर्थः च। अस्माकं सम्पत्तिः पुत्री-जामात्रोः एव भविष्यति खलु? अतः जामातुः आर्थिकानुकूल्यं न द्रष्टव्यम्, अपि तु गुणसम्पन्नता द्रष्टव्या। अग्रे पुत्री जामाता च परस्परम् अवगत्य जीवेताम्। नरेन्द्रस्य व्यवहाराः बहोः कालतः परीक्षिताः मया। मम पुत्र्याः योग्यः वरः इति सुविचिन्त्य मया निर्णीतम्" इति।

"एवं तर्हि मम सख्याः पुत्रः वीरेन्द्रः गुणहीनः, अनागरिकः, अन्यस्य अवगमने असमर्थः इति वा भवतः निर्णयः?" इति असन्तोषेण पृष्टवती पार्वती।

तदा चन्द्रचूडः मन्दहासपूर्वकं– "पार्वति! अलं कोपेन। गुणपक्षपाती अहम्। वीरेन्द्रे मम अनादरः सर्वथा नास्ति। पुत्री कस्मै दातव्या इति खलु चर्चा? नरेन्द्र-वीरेन्द्रयोः सामर्थ्यस्य

परीक्षां करवाव। यः तत्र जयं प्राप्नोति तस्मै पुत्रीं दास्यावः। भवतु वा?" इति पत्नीं पृष्टवान्।

पार्वती एतं प्रस्तावम् अङ्गीकृतवती। अनन्तरदिने चन्द्रचूडः वीरेन्द्रम् आहूय– "वत्स! एतत् धनं स्वीकरोतु। पार्श्वग्रामे साप्ताहिकवाणिज्यं प्रचलति। ततः एकं वृषभयुगलम् आनेतव्यं भवता। यौ वृषभौ परस्परम् अवगन्तुं शक्नुतः तादृशौ वृषभौ आनेतव्यौ" इति उक्तवान्।

वीरेन्द्रः तत्क्षणे एव ततः निर्गतवान्। साप्ताहिकवाणिज्यस्थले विक्रयणार्थम् आनीताः बहवः वृषभाः आसन्। वीरेन्द्रः उत्तमौ वृषभौ चित्वा वृषभस्वामिनं पृष्टवान्– "एतौ वृषभौ परस्परम् अवगन्तुं समर्थौ वा?" इति।

"परस्परावगमनं मानवानां स्वभावः। वृषभजातौ तादृशः गुणः कथं स्यात्? भवान् वृषभौ क्रेतुम् आगतवान्, उत असम्बद्धं प्रष्टुं, ततः सन्तोषं प्राप्तुं च आगतवान्?" इति कोपेन पृष्टवान् वृषभस्वामी।

अन्ये वृषभविक्रेतारः अपि एतादृशम् एव अभिप्रायं प्रकटितवन्तः।

वीरेन्द्रः मध्याह्नसमये चन्द्रचूडस्य गृहं प्रत्यागत्य– "साप्ताहिकवाणिज्यस्थले उत्तमाः वृषभाः बहवः सन्ति। किन्तु अहं यदा 'परसपरावगमनसमर्थौ वृषभौ अपेक्षितौ' इति उक्तवान् तदा सर्वे वणिजः हसितवन्तः। शिष्टाचारम् अजानद्भिः, माम् उपहसद्भिः तादृशैः वणिग्भिः सह कथं व्यवहारं कर्तुं



शक्येत? अहं कोपेन प्रत्यागतवान्" इति उक्तवान्।

अनन्तरं चन्द्रचूडः नरेन्द्रम् आनाय्य वीरेन्द्रं यथा उक्तवान् आसीत् तथैव उक्त्वा साप्ताहिकवाणिज्यस्थलं प्रति प्रेषितवान्।

सायङ्कालसमये सुन्दराभ्यां सुदृढाभ्यां वृषभाभ्यां सह नरेन्द्रः चन्द्रचूडस्य गृहम् आगतवान्।

चन्द्रचूडः तौ दृष्ट्वा तृप्त्या मन्दहासं प्रकटयन्– "वृषभयुगलम् अपूर्वम् अस्ति। किन्तु एतौ वृषभौ परस्परम् अवगत्य शकटं वहतः वा न वा इति कथं ज्ञायते?" इति पृष्टवान्।

"तादृशः स्वभावः एतयोः अस्ति वा न वा इति परिशील्य एव एतौ क्रीतौ मया" इति आत्मविश्वासपूर्वकम् उक्तवान् नरेन्द्रः।

द्वारसमीपे स्थित्वा सम्भाषणं कुर्वन्तौ एतौ दृष्ट्वा बहिः आगत्य पृष्टवती पार्वती– "स च स्वभावः अस्ति वा न वा इति कथं परीक्षितं भवता?" इति।

तदा नरेन्द्रः– "क्रयणात् पूर्वम् एतौ शकटस्य युगे योजितवान्। कशया ताडयन् एकं वृषभं चोदितवान्। मया चोदितः वृषभः यदा गन्तुम् उद्युक्तः तदा अपरः अपि चलनम् आरब्धवान्। शकटं च समगत्या अगच्छत्। एतेन मया निर्णीतं यत् एतयोः परस्परावगमनसामर्थ्यम् अस्ति इति" इति उक्त्वा वृषभौ गोष्ठं प्रति नीतवान्।

गच्छन्तं तं साभिमानं पश्यन् पत्नीम् उक्तवान् चन्द्रचूडः– "वीरेन्द्र-नरेन्द्रयोः कतरः उत्तमः इति इदानीं ज्ञातं खलु? वचनस्य अर्थः सर्वैः ज्ञायते। किन्तु वास्तविकं तात्पर्यं केचन एव ज्ञातुं शक्नुवन्ति। एतादृशं सामर्थ्यं निरूपयन् नरेन्द्रः एव जयं प्राप्तवान्" इति।

"ममापि गुणिनि एव आदरः, यतः अहं भवतः पत्नी खलु? नरेन्द्रः आवयोः जामाता भविष्यति। अद्यैव पुरोहितं दृष्ट्वा मुहूर्तं निश्चित्य आगच्छतु तावत्" इति पतिम् उक्तवती पार्वती।



# प्रकृतिवैचित्र्याणि–



## मधुमक्षिकायाः अतिप्राचीनम् अस्थि

पञ्चकोटिवर्षेभ्यः पूर्वं किं मधुमक्षिकाः आसन्? विज्ञानिनः वदन्ति– "आम्" इति। जर्मनीदेशीयाः पुरातत्त्वविज्ञानिनः ईफेल्प्रदेशे शिलापटलस्य मध्ये प्राप्तं मधुमक्षिकायाः अस्थि अत्र प्रमाणत्वेन उदाहरन्ति। ते वदन्ति यत् अतिप्राचीनः अस्थ्यवशेषः एषः एव इति। एतत् अस्थि ९ मि.मी. दीर्घम् अस्ति। इदानीं याः मधुमक्षिकाः दृश्यन्ते तासाम् अस्थि अपि एतादृशम् एव भवति इति श्रूयते।



## राक्षसगोधिकानाम् अण्डानि

चीनादेशे ७,५०,००,००० वर्षेभ्यः पूर्वं स्थितायाः राक्षसगोधिकायाः (डिनोसार्) अण्डानि प्राप्तानि सन्ति। अमेरिकादेशे तु १४,५०,००,००० वर्षेभ्यः पूर्वं जातानि राक्षसगोधिकायाः अण्डानि प्राप्तानि सन्ति। चीनादेशे हनान्समीपे यत् अण्डद्वयं प्राप्तं तत् जर्मनीस्थां हमोवर्संशोधनसंस्थां प्रति प्रेषितम्। तस्मिन् अण्डद्वये अस्थित्वं गतं पिण्डं किमपि स्यात् वा इति परिशोधयन्तः सन्ति विज्ञानिनः। अमेरिकादेशे डेन्वरप्रदेशे भग्नम् अण्डं यत् प्राप्तं तस्य अन्तः अस्थ्यवशेषः प्राप्तः आसीत्। इतः पूर्वं कालरोडोप्रदेशे षट् अण्डावरणानि प्राप्तानि आसन्। उटालोप्रदेशे प्राप्तानि राक्षसगोधिकाण्डानि आकारेण कुक्कुटाण्डात् किञ्चिदेव बृहन्ति आसन्।



## तमिळनाडुराज्ये 'दन्तवती जतुका'

गिन्नीस्पुस्तकस्य अनुसारं ज्ञायते यत् प्रपञ्चे विरलतया दृश्यमानासु त्रिविधासु जतुकजातीयासु अन्यतमा अस्ति 'दन्तवती जतुका' इति। पञ्चभ्यः वर्षेभ्यः पूर्वं ए.एफ्. हाटन्नामकः पक्षिशास्त्रज्ञः तमिळनाडुराज्यस्य पश्चिमपर्वतप्रदेशे एकां दन्तवतीं जतुकां प्राप्तवान् आसीत्। तां सः मुम्बयीस्थां "न्याचुरल् हिस्टरी सोसैटी'नामिकां संस्थां प्रति नीतवान् आसीत्। तत्र शास्त्रज्ञैः सम्यक् परीक्ष्य निर्णीतम् आसीत् यत् विरलतया प्राप्यमाणासु अन्यतमा एषा इति। अतः सा तैः प्रसिद्धपक्षिशास्त्रस्य डा.सलीम अलीवलर्यस्य नाम्ना निर्दिष्टा। अस्मिन् वर्षे मुम्बयीसंस्थायाः कश्चित् पक्षिशास्त्रज्ञः, इंग्लेण्ड्देशीयः 'हारिसन् जुवोलोजिकल् म्यूसियम्'नामिकायाः संस्थायाः विज्ञानी च तमिळनाडुराज्यस्य तस्मिन् एव प्रदेशे अपरां जतुकां दृष्टवन्तौ। एते उभे अपि संस्थे जतुकविषये संशोधनं कुर्वत्यौ स्तः।

# लघु साहाय्यम् आवश्यकम्।

| | |
|---|---|
| अरुणः – रमेशावर्य! नमस्ते। भवान् कुत्रापि प्रस्थितवान् इव! | Namasthe Mr. Ramesh. You seem to be going out. |
| रमेशः – आम्। मित्रगृहं प्रति प्रस्थितवान् आसम्। आगच्छतु। उपविशतु। किमपि कार्यम् आसीत् वा? | Yes. I am about to go to a friend's house. Come in. Sit down. What can I do for you? |
| अ – लघु साहाय्यम् आवश्यकम् आसीत्। किन्तु भवान् कुत्रापि प्रस्थितः इव। | I need a small help, but you are going out! |
| र – चिन्ता नास्ति। वदतु, कीदृशं साहाय्यम् आवश्यकम्? | Doesn't matter., tell me, what I can do for you? |
| अ – परश्वः मम शालायां भाषणस्पर्धा अस्ति। 'परिसरमालिन्यम्' इति विषयः। एतद्विषये भवान् कांश्चन बिन्दून् वक्तुं शक्नुयात् वा? | We have an elocution competition in our school the day after. The subject is 'Environmental pollution'. Can you help me with a few points on the subject? |
| र – परिसरमालिन्यविषये लिखितैः प्रबन्धैः युक्तानि द्वित्राणि पुस्तकानि मम समीपे सन्ति। तानि ददामि। प्रथमं तानि पठतु। ततः अहम् अपि कांश्चन बिन्दून् वदिष्यामि। | I have two or three books containing articles on environmental pollution. I shall give them to you. Go through them in the first instance. I shall also give you some points. |
| अ – तर्हि तानि ददातु। अद्य पठित्वा श्वः प्रातः भवन्तं द्रक्ष्यामि। | Please give me the books. I shall read the articles today and meet you tomorrow. |
| र – भवतु। प्रातः ८.३० तः पूर्वम् आगच्छतु। विस्तरेण चर्चां करवाव। | OK. Come before 8.30 in the morning tomorrow. We shall have a detailed discussion. |

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकां फेब्रवरी-९४ मासे प्रकटयिष्यामः।



N. Sambasiva Rao



M. Natarajan

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा डिसेम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

### 'अक्टोबर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **सन्त्यत्र नावः, को नाम गन्ता?**

द्वितीयचित्रम् - **नास्तीह यानं गन्तुं दिगन्तम्।**

प्रेषकः - श्री पि.एस्. राममूर्तिः, ८९/१५ वेल्लाल स्ट्रीट्, फ्लावर्स् रोड्, मद्रास्-८४


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ४८-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of *CHANDAMAMA PUBLICATIONS*, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अङ्गारधानी - | Charcoal Stove | निसर्गः - | Nature (Environment) |
| अध्येता - | A student | परावर्तयितुम् - | To turn backwards |
| अनुमन्यते - | Agrees | प्रतिष्ठते - | Starts |
| अपरीक्ष्य - | Without examination | प्रयतमानः - | Trying |
| अवगत्य - | Having known | मधुमक्षिका - | Honey-bee |
| आवुत्तः - | Brother-in-law | याचते - | Begs |
| उडुपः - | Raft | यातायातसम्मर्दः - | Traffic |
| उद्घोषितम् - | Was announced | युगम् - | Yoke |
| उपत्यका - | Land at the foot of a hill | युगलम् - | Pair |
| | | यौतकम् - | Gifts given to a daughter at marriage |
| उपनेत्रम् - | Spectacles | | |
| उपसर्पणम् - | Getting near | रुचिः - | Liking |
| कतरः - | Which of the two | लोकयानम् - | Bus |
| क्रीडनकम् - | Toy | लोम - | Hair on one's body |
| खनिजाङ्गारम् - | Coal | वितर्दिका - | Pyol |
| गलितुम् - | To swallow | विदीर्णः - | Split |
| गुणी - | Man of good character | वैशिष्ट्यम् - | Speciality |
| | | सकृत् - | Once |
| गोष्ठम् - | Cowshed | सन्धिः - | Agreement |
| चोदितवान् - | Instigated | समः - | Equal |
| जतुका - | Bat | स्रष्टव्यः - | To be created |
| त्रिचक्रिका - | Autoriksha | साभिमानम् - | With affection |
| निर्मातुम् - | To build | | |




Say

so long

to every

other

toffee




*Bakeman's are proud to announce the luxury length toffee you've been longing for, in 3 unbeatable flavours: Chocolate, Milk and Coconut.*



